# DAŚA KUMÁRA CHARITA.

PÚRBAKHANDAM.

BY

ÁCHÁRYA ŚRÍ DAṆḌÍ.

( From Chapt. I. to V. )

EDITED BY

PANDITA DAMARU VALLABHA PANTA.

AT THE REQUEST OF BÁBU

BHUVANA CHANDRA VASÁKA

CALCUTTA :

PRINTED & PUBLISHED BY

BÁBU BHUVANA CHANDRA VASÁKA.
At the Sambáda Jnánaratnákara Press.
No. 32. Nimtollah Ghaut Street.
1868.

# दशकुमारचरितम् ।

पूर्व्वखण्डम् ।

श्रीमदाचार्य्यमहाकविदण्डिकृतम् ।

---

श्रीडमरुवल्लभ शर्म्मणा
परिशोधितम् ।

कलिकातानगरे

श्रीयुतभुवनचन्द्रवसाकमहोदयस्य प्रार्थनया
तद्वारैव संवादज्ञानरत्नाकरयन्त्रे
१६२५ संवत्सरे
मुद्रितम्

# विज्ञापना।



आसीदशेषकविवृन्दवन्दनीयपादपद्मो दण्डीनाम महाकविः यः साहित्यशास्त्रं काव्यादर्शाऽभिधेयं गुणदोषरीत्यऽलङ्कारादिवर्णनायाऽकार्षीत्। यश्च कालिदासेन कविराजोऽहमुत्कृष्ट इति विवदमानस्य गणिकाशरीरिणीं वाणीं परिक्षायै नियुज्य खदिरसारनागवल्लीदलमुपलभ्य –

विना खदिरसारेण हारेण हरिणीदृशाम्।
नाधरे जायते रागो नानुरागः पयोधरे॥

इति खदिरं याचमानस्य दण्डिनो निस्तूर्णताम्बूललाभतः।

तूर्णमानीयताञ्चूर्णं पूर्णचन्द्रनिभानने।

इति वदतः कालिदासादुत्कृष्टतामभिप्रेत्य दण्डी मे प्रियोभक्ता इति कथयन्तीकोपवशेन कालिदासेन कोऽवारण्ड इत्यऽभिधीयमानां मत्तोऽपि मद्भक्तः कविवर इत्याशयेन त्वन्त्वहमेवेति कथयतिस्मेति जनश्रुतिराश्रयति।

स एष कविर्दण्डी राजकुमारान् सुकुमारमतीनतिकठोरे नीतिशास्त्रेऽनभिप्रवर्त्तमानान् शिक्षयन् रसादिसहितं शृङ्गाररसप्रायं दशकुमारचरितनामानं निबन्धमभिनिर्ममे। स एष निबन्धो रसखाङ्केक ( १९०६ ) परिमिते विक्रमार्कशके श्रीमदनमोहनतर्काऽलङ्कारेण पूर्व्वपीठिकां मनसि सन्दधाने

उत्तरः खण्डएवाऽमुद्रियत। स चोत्तरः खण्डो पूर्व्वपीठिकोपवर्णितोदन्तविरहितेन रसिकेनाऽवलोकितो न याथातथ्येन रसमुद्भावयतीति मन्यमानेन नेपालनगरनिलये मया वाराणसेयञ्चेपालीयञ्च पुस्तकमुपलभ्य विशोध्य च यथामति श्रीयुक्तभुवनचन्द्रनामा वसाकोपनामा सपूर्व्वखण्डमुद्रणायां प्रार्थितोऽङ्गीकृत्य याचितं सम्बाद्ज्ञानरत्नाकरयन्त्रालये तमेतन्निबन्धं मुद्रयति स्म। स एष निबन्धः कविगौरवाद्वा प्रबन्धसौन्दर्य्याद्वा नीतिज्ञानाऽभिलाषाद्वा शोधकमुद्रयित्रऽनुरोधाद्वा सौजन्यपक्षपाताद्वा गुणग्राहिभिः सद्भिरवश्यमादरपुरःसरमवलोकनीय इत्यभ्यर्थित इति।

पन्तोपनामक पण्डित-
श्रीडमरुवल्लभ शर्म्मणा।

# दशकुमारचरितम्।

## पूर्व्वखण्डे

## कुमारोत्पत्तिर्नाम

### प्रथम उच्छ्वासः।

ब्रह्माण्डच्छत्रदण्डः शतधृतिभवना
म्भोरुहो नालदण्डः क्षोणीनौकूपदण्डः
क्षरदमरसरित्पट्टिकाकेतुदण्डः।
ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजय
स्तम्भदण्डोऽङ्घ्रिदण्डः श्रेय[स्त्रैविक्रमस्ते]
वितरतु विबुधद्वेषिणां कालदण्डः॥२॥

अस्ति समस्तनगरीनिकषायमाणा शश्वदगण्यपण्यविस्तारितमणिगणादिवस्तुजातव्याख्यातरत्नाकरमाहात्म्या मगधदेशशेखरीभूता पुष्पपुरी नाम नगरी। तत्र वीरभटपटलोत्तरङ्गतुरङ्गकुञ्जरमकरभीषणसकलरिपुगणकटकजलनिधिमथनमन्दराय-

[त्रैविक्रमोवो इति क्वचित्पाठः।]

माणसमुद्दण्डभुजदण्डमण्डनः पुरन्दरपुराङ्गनवन-
विहरणपरायणतरुणगणिकागणजेगीयमानयाऽति-
मानया शरदिन्दुकुन्दघनसारनीहारहारमृणाल-
मरालसुरगजनीरक्षीरगिरिशाट्टहासकैलाशकाशनी-
काशमूर्त्या रचितदिगन्तरालपूर्त्या कीर्त्याऽभितः
सुरभितः स्वर्लोकशिखरोरुरुचिररत्नरत्नाकरवेला-
मेखलावलयितधरणीरमणीसौभाग्यभोग्यभाग्यवान-
नवरतयागदक्षिणारक्षितशिष्टविशिष्टविद्यासम्भार-
भासुरभूसुरनिकरो विरचितारातिसन्तापेन प्रतापेन
सततन्तुलितवियन्मध्यहंसो राजहंसो घनदर्पकन्दर्प-
सौन्दर्यसोदर्यहृद्यनिरवद्यरूपो भूपो बभूव। तस्य
वसुमतीनाम सुमतिर्लीलावती कुलशेखरमणी रमणी
बभूव। [रोषरूक्षेण] निटिलाक्षेण भस्मीकृतचेतने
मकरकेतने तदा भयेनानवद्या वनितेति मत्वा तस्य
रोमावलीकेशजालं प्रेमाकरो रजनीकरो विजि-
तारविन्दं वदनं जयध्वजायमानो मीनो जायायुतो-
ऽक्षियुगलं सकलसैनिकाङ्गवीरो मलयसमीरो निःश्वासः
पथिकहृद्दलनः करवालः प्रवालश्चाधरबिम्बं जयश-
ङ्खो बन्धुरालावण्यधरा कन्धरा पूर्णकुम्भौ चक्रवाका-

[रोषभीषणेनेति क्वचित्पाठः।]

ऽनुकारौ पयोधरौ ज्यायमाने मार्द्दवारूमाने विसलते बाहू ईषदुत्फुल्ललीलावतंसकह्लारो गङ्गावर्त्तसनाभिर्नाभिः दूरीकृतयोगिमनोरथो जैत्ररथोऽतिघनज्ञघनं जयस्तम्भभूते सौन्दर्य्यभूते विघ्नितयतिजनारम्भे रम्भे चोरुयुगं आतपत्रसहस्रपत्रं पादद्वयमस्त्रभूतानि प्रसूनानि तानीतराण्यङ्गानि समभूवन्निव विजितामरपुरे पुष्पपुरे निवसता सा वसुमती वसुमतीव मगधराजेन यथासुखमन्वभावि । तस्य राज्ञः परमविधेयाः ( धर्मपालपद्मोद्भवसितवर्मनामधेया ) धीरधीषणावधीरितविबुधाचार्य्यविचार्य्यकार्य्यसाहित्याः कुलामात्यास्त्रयोऽभूवन् । तेषां सितवर्मणः ( सुमतिसत्यवर्माणौ ) धर्मपालस्य (सुमन्त्रसुमित्रकामपालाः) पद्मोद्भवस्य ( सुश्रुतरत्नोद्भवाविति ) तनयाः समभूवन् । तेषु धर्मशीलः सत्यवर्मा संसाराऽसारतां बुध्वा तीर्थयात्राभिलाषी देशान्तरमगमत् । विटनटवारनारीपरायणो दुर्विनितः कामपालो जनकाग्रजन्मनोः शासनमतिक्रम्य भुवं बभ्राम । रत्नोद्भवोऽपि वाणिज्यनिपुणतया पारावारतरणमकरोत् । इतरे मन्त्रिसूनवः पुरन्दरपुरातिथिषु पितृषु यथापूर्व्वमन्वतिष्ठन् । ततः कदाचिन्नानाविधमहदायुधनैपुण्यरचितागण्यजन्याजन्यमौलिपालिपालिनिहितनिशितसायको मगधनायको मालवे-

स्मरं प्रत्यग्रसंग्रामघस्मरं समुत्कटमानसारं मानसा-
रम्प्रति सहेलन्यक्कृतजलधिनिर्घोषाहङ्कारेण भेरी-
झाङ्कारेण हटिकाकर्णनाक्रान्तभयचण्डिमानं दिग्-
दन्तावलवलयं विघूर्णयन् निजभरनमन्मेदिनीभरे-
णायस्तभुजगराजमस्तकबलेन चतुरङ्गबलेन संयुतः
संग्रामाऽभिलाषेण रोषेण महताऽविष्टो निर्ययौ ।
मालवनाथोप्यनेकानेकपयूथसनाथो विग्रहः सवि-
ग्रह इव साग्रहोऽभिमुखीभूय भूयोनिर्जगाम ।
तयोरथ रथतुरङ्गखुरक्षुण्णक्षोणीसमुद्भूते करि-
घटाकटस्रवन्मदधाराधौतमूलेनववल्लभवरणागतदि-
व्यकन्यकाजनजवनिकापटमण्डल इव वियत्तल
व्याकुले धूलीपटले दिविषद्ध्वनिधिक्कृतान्यध्वनि-
पटहध्वानवधीरिताशेषदिगन्तरालं शस्त्राशस्त्रि-
हस्ताहस्ति परस्पराऽभिहतसैन्यं जन्यमजनि । तत्र
मगधनाथः प्रक्षीणसकलसैन्यमण्डलं मालवराजं
जीवग्राहमभिगृह्य कृपालुतया पुनरपि स्वराज्ये
प्रतिष्ठापयामास । ततः सरत्नाकरमेखलामिला
मनन्यशासनां शासन्ननपत्यतया नारायणं सकल-
लोकैककारणं निरन्तरमर्चयामास । अथ कदा-
चित् तदग्रमहिषीदेवी देवेन कल्पवल्लीफलमाप्नु-
हीति विभातसमये सुस्वप्नमवलोकितवती सा तदा
दयितमनोरथपुष्पभूतं गर्भमधत्त । राजापि सम्प-

न्यकृताखण्डलः सुहृन्नृपमण्डलं समाहूय निज-सम्पन्मनोरथानुरूपं देव्याः सीमन्तमहोत्सवं व्यध-त्त। एकदा हितैः सुहृन्मित्रपुरोहितैः सभायां सिंहासनासीनो गुणैरहीनो [भालस्थलन्यस्ताञ्ज-लिना] द्वारपालेन व्यज्ञापि। देव कन्दर्पनताल-समानसः कोपि देवेन विरच्यार्चनार्हो यति[र्द्वारि निवसतीति]। तदनुज्ञातेन तेन स संयमी नृप-समीपमनायि। भूपतिरायान्तं तं विलोक्य सम्यग्-ज्ञाततदीयगूढचारभावो निखिलमनुचरनिकरं विसृज्य मन्त्रिजनसमेतः प्रणतिमेनं मन्दहास-मभाषत। ननु तापस देशं सापदेशं भ्रमन् भवा-न्तत्र तत्र भवदभिज्ञातं कथयत्विति। तेनाभाषि भूभ्रमणबलिना प्राञ्जलिना। देव शिरसि देव-स्याज्ञामादायैनं निर्दोषवेषं स्वीकृत्य मालवेन्द्रनगरं प्रविश्य तत्र गूढतरं वर्त्तमानस्तस्य राज्ञः समस्त-मुदन्तजातं विदित्वा प्रत्यागमम्। मानी मानसारः स्वसैनिकायुष्याऽन्तराये सम्पराये भवतः पराजय-मनुभूय वैलक्ष्यलक्ष्यहृदयोऽपीतदयो महाकालनि-वासिनं कालीविलासिनमनश्वरं महेश्वरं समाराध्य तपःप्रभावसन्तुष्टादस्मादेकवीरारातिघ्नीं भयदां

[ललाटतलन्यस्तेति क्वचित्पाठः।]

[द्वारदेशमध्यास्त इति क्वचित्पाठः।]

गदां लब्ध्वाऽत्मानमप्रतिभटं मन्यमानो महाभिमानो भवन्तमभियोद्धुमुद्युङ्क्ते। ततः परं देवप्रमाणमिति। तदाऽऽलोच्य निश्चिततत्कृत्यैरमात्यै राजा विज्ञापितोऽभूत्। देव निरुपायेन दैवसहायेन योद्धुमरातिरायाति। तस्मादस्माकं युद्धं साम्प्रतमसाम्प्रतम्। सहसा दुर्गसंश्रयः क्रियतामिति। तैर्बहुधा विज्ञापितोऽप्यखर्व्वेण गर्व्वेण विराजमानो राजा तद्वाक्यमकृत्यमित्यनादृत्य प्रतियोद्धुमना बभूव। शितिकण्ठदत्तशक्तिसारो मानसारो मानसारो योद्धुमनसामग्रीभूय सामग्रीसमेतोऽक्लेशं मगधदेशं प्रविवेश। तदा तदाकर्ण्य मन्त्रिणो भूमहेन्द्रं मगधेन्द्रं कथञ्चिदनुनीय रिपुभिरसाध्ये विन्ध्याटवीमध्येऽवरोधान् मूलबलरक्षितान्निवेशयामासुः। राजहंसस्तु प्रशस्तवीतदैन्यसैन्यसमेतस्तीव्रगत्या निर्गत्याऽधिकरुषं द्विषं रुरोध। परस्परबद्धवैरयोरेतयो शूरयोस्तदालोकनकौतुहलाऽऽगतगगनचराश्चर्य्यकारणे रणे वर्त्तमाने जयकाङ्क्षी मालवदेशरक्षी विविधायुधस्थैर्य्यचर्य्याञ्चितसमरतुलितामहेश्वरस्य मगधेश्वरस्य तस्योपरि पुरारातिदत्तां गदां प्राहिणोत्। निशितशरघातेन शकलीकृताऽपि सा पशुपतिशासनस्यावन्ध्यतया सूतं निहत्य रथस्थं राजानं मूर्च्छितमकार्षीत्। ततो वीतप्रग्रहा अक्षतविग्रहा वाहा

रथमादाय दैवगत्यान्तःपुरशरण्यं प्राविशन्। मालव-
नाथो जयलक्ष्मीसनाथो मगधराज्यं प्राज्यं समाक्रम्य
पुष्पपुरमध्यतिष्ठत्। तत्र हेतिततिहतिश्रान्ता
अमात्या दैवगत्यानुत्क्रान्तजीविता निशान्तवात-
लब्धसंज्ञाः कथञ्चिदाश्वास्य राजानं समन्तादन्वीक्ष्या-
ऽनवलोकितवन्तो दैन्यवन्तो देवीमवापुः। वसुमती
च तेभ्यो निखिलसैन्यक्षतिं राज्ञोऽदृश्यत्वं चाकर्ण्यो-
द्विग्ना शोकसागरमग्ना रमणानुगमने मतिं व्यधत्त।
कल्याणि भूरमणमरणमनिश्चितं किञ्च दैवज्ञकथितो
मथितोद्धताराति: सार्व्वभौमोऽभिरामो भविता सुकु-
मारः कुमारस्त्वदुदरे वसति। तस्मादद्य तव
मरणमनुचितमिति। भूषितभाषितैरमात्यपुरो-
हितैरनुनीयमानया तया क्षणं क्षणहीनया तूष्णी-
मस्थायि। अथार्द्धराले निद्रालीढनेत्रे परिजने
विजने शोकपारावारमपारमुत्तर्त्तुमक्षमा सती सेना-
निवेशदेशं निःशब्दलेशं शनैरतिक्रम्य यस्मिन्
रथस्य संसक्ततया तदानयनपलायनपरिश्रान्ता
गन्तुमक्षमाः क्षमापतिस्थाः पथ्याकुलाः पूर्व्वमति-
ष्ठत्। तस्य निकटवटतरोः शाखायां मृतिरेखा-
यामिव क्वचिदुत्तरीयार्द्धेन बन्धनं मृतिसाधनं
विरच्य मर्त्तुकामाऽभिरामा वाङ्माधुरीदूरीकृत
कलकण्ठकण्ठा साश्रुकण्ठा व्यलपत्। लावण्योप

स्मितपुष्पसायक भूनायक भवानेव भाविन्यपि जन्मनि
वल्लभो भवत्विति। तदाकर्ण्य नीहार कर-
किरणसम्पर्कलब्धाऽवबोधोऽगाधरुधिरविचरच्चरणनष्ट-
चेष्टः स देवीवाक्यमेव निर्‍श्चिन्वानस्तन्वानः प्रिय-
वचनानि शनकैस्तामाह्वयत्। सा ससम्भ्रममागत्या
ऽमन्दहृदयाऽनन्दप्रफुल्लवदनारविन्दा तमुपोषिता-
भ्यामिवानिमेषिताभ्यां लोचनाभ्यां पिबन्ती पिक-
स्वरेण स्वरेण पुरोहितामात्यजनमुच्चैराहूय तेभ्य-
स्तमदर्शयत्। राजा निटिलतले चुम्बितनिज-
चरणाम्बुजैः प्रशंसितदैवमाहात्म्यैरमात्यैरभाणि।
देव रथ्यचयः सारथ्यऽपगमे रथं रभसादरण्यमन-
यदिति। तत्र निहित सैनिकग्रामे संग्रामे माल-
वपतिना राधितपुरारातिना प्रहितया गदया
ह्रीनेन ताड़ितो मूर्छामागत्याऽत्रवने निशीथप
वनेन बोधितोऽभवमिति महीपतिरकथयत्। ततो
विरचितमहेन मन्त्रिनिवहेन विरचितदैवाऽनुकूल्येन
कालेन शिबिरमानीयापनीताशेषशल्यो विकसित-
निजाननारविन्दो राजा सहसा विरोपितव्रणोऽ-
कारि। विरोधिदैवधिक्कृतपुरुषकारो दैन्यव्याप्ता-
कारो मगधाधिपतिरधिकाधिरमात्यसंमत्या मृदुभा-
षितया तया वसुमत्या मत्याकलितया च सम-
बोधि। देव सकलस्य भूपालकुलस्य मध्ये तेजो

वरिष्टो गरिष्टो भवानद्य विन्ध्यवनमध्ये निवसतीति। सलिलबुद्बुदसमाना विराजमाना सम्पत्तडिल्लतेव सहसैवोदयति। विनश्यति च तस्मिन्निखिलं दैवायत्तमेवाऽवधार्य्यं कार्य्यम्। किञ्च पुरा हरिश्चन्द्ररामचन्द्रमुख्या महीन्द्रा ऐश्वर्य्योपमितमहेन्द्रा दैवतन्त्रं दुःखयन्त्रं सम्यगनुभूय पश्चादनेककालं निजराज्यमकुर्व्वन्। तद्वदेव भवान्भविष्यति। कञ्चन कालं विरचितदैवसमाधिर्गलिताधिस्तिष्ठतु तावदिति। ततः सकलसैन्यसमन्वितो राजहंसस्तपोविभ्राजमानं वामदेवनामानं तपोधनं निजाभिलाषाऽवाप्तिसाधनं जगाम। तं प्रणम्य तेन कृतातिथ्यस्तस्मै कथितकथ्यस्तदाश्रमे दूरीकृतश्रमे कञ्चन कालमुषित्वा निजराज्याऽभिलाषी मितभाषी सोमकुलाऽवतंसो राजहंसो मुनिमभाषत। ब्रह्मन् मानसारः प्रबलेन दैवबलेन मां निर्जित्य मद्भोग्यं राज्यं चाऽनुभवति। तद्वदहमप्युग्रं तपो विरच्य तमरातिमुन्मूलयिष्यामि। लोकशरण्येन भवत्कारुण्येनेति नियमवन्तं भगवन्तं प्राप्नुवमिति। ततस्त्रिकालज्ञस्तपोधनो राजानमवोचत्। सखे शरीरकार्श्यकारिणा तपसाऽलम्। वसुमतीगर्भस्थः सकलरिपुकुलमर्द्दनो राजनन्दनो नूनं सम्भविष्यति। कञ्चन कालं तूष्णीमास्स्वेति। गगनचारिण्या वा-

णयाऽप्येतत्सत्यमिति तयैवाऽवोचि । राजाऽपि मुनिवाक्यमङ्गीकृत्याऽतिष्ठत् । ततः सम्पूर्णगर्भदिवसा वसुमती शुभमुहूर्त्ते सकललक्षणसम्पूर्णं सुतमसूत । ब्रह्मवर्चसेन तुलितवेधसं पुरोधसं पुरस्कृत्य कृतविन् महीपतिः कुमारं सुकुमारं जातसंस्कारेण बालालङ्कारेण च विराजमानं राजवाहननामानं व्यधत्त । तस्मिन्नेव काले (सुमतिसुमन्त्रसुमित्रसुश्रुतानां) मन्त्रिणां (प्रमिति मित्रगुप्तमन्त्रगुप्तविश्रुताख्या) महदभिख्यास्सूनवो नवोद्यदिन्दुरुचश्चिरायुषः समजायन्त । राजवाहनो मन्त्रिपुत्रैरात्ममित्रैः । सह बालकेलिमनुभवन्नवर्द्धत । कदाचिदेकेन तापसेन रसेन राजलक्षणविराजितं कञ्चिन्नयनानन्दकरं राज्ञे समर्प्याऽवोचि । भूवल्लभ कुशसमिदानयनाय वनं गतेन मया कदाचिदशरण्या व्यक्तकार्पण्याऽश्रु मुञ्चती वनिता विलोकिता । निर्जने वने किन्निमित्तं रुद्यते त्वयेति पृष्टा सा करसरोरुहैरश्रु प्रमृज्य समद्गदं मामवोचत् । मुने लावण्यजितपुष्पसायके मिथिलानायके कीर्त्तिव्याप्तसुधर्म्मणि निजसुहृदो मगधराजस्य सीमन्तिनी सीमन्तमहोत्सवाय पुत्रदारसमन्विते पुष्पपुरमुपेत्य कञ्चन कालमधिवसति । समाराधितगिरिशो मालवाधीशो मगधराजं योद्धुम-

गात्। तत्र प्रख्यातयोरेतयोरसङ्ख्ये सङ्ख्ये वर्त्त-मानै सुहृत्साहाय्यकं कुर्वाणो निजबले सति विक्षये विदेहेश्वरो जयवता रिपुणाऽभिगृह्य कारु-ण्येन पुण्येन विसृष्टो हतावशेषेण शून्येन सैन्येन सह स्वपुरगमनमकरोत्। ततो वनमार्गेण दुर्गेण गच्छन्नधिकबलेन शवरबलेन रभसाभिहन्यमानो मौलबलाभिरक्षितावरोधः स्वमहानिरोधः पला-यिष्ट। तदीयाऽर्भकयोर्य्यमलयोर्धात्रीभावेन परि-कल्पिताहं मद्दुहिताऽपि तीव्रगतिं भूपतिमनुगन्तु-मक्षमे अभूव। तत्र विवृतवदनः कोपिरूपी कोपइव व्याघ्रः शीघ्रं मामाघ्रातु मागतवान्। भीताह-मुग्रग्राव्णि स्खलन्तीपर्य्यपतम्। मदीयपाणिभ्रष्टो बालकः कस्यापि कपिल शवस्य क्रोड़मलीयत। तच्छवाऽकर्षिणोऽमर्षिणो व्याघ्रस्य प्राणान् बाणो बाणासनयन्त्रमुक्तोऽपाहरत्। विलोलाऽलको बा-लकोऽपि शवरैरानीय कुत्रचिदुपानीयत। कुमार-मपरमुद्वहन्ती मम नन्दनी कुत्र गता न जानामि। साऽहं मोहं गता केनापि कृपालुना वृष्णिपालेन स्वकुटीरमावेश्य विरोपितव्रणाऽभवम्। ततः स्वस्थी-भूय भर्त्तुरन्तिकमुपतिष्ठासुरसाहाय्यतया दुहि-तुरनभिज्ञाततया च व्याकुलीभवामीत्यभिदधाना एकाकिन्यपि स्वामिनं गमिष्यामीति सा तदेव

निरगात्। अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं विषादमनुभवन् तदन्वयाङ्कुरं कुमारमन्विष्यन्। तत्रैकं चण्डिकामणिमन्दिरं सुन्दरं मागाम्। तत्र सन्ततमेवम्विधविजयसिद्धये कुमारं देवतोपहारं करिष्यन्तः किराता महीरुहशाखाविलम्बितमेनमसिलतया सैकततले खनननिक्षिप्तचरणं लक्ष्यीकृत्य शितशरनिकरेण वाऽनेकचरणैः पलायमानं कुक्कुरबालकैर्वा दंशयित्वा संहनिष्याम इति संलपन्तो मया समभाष्यन्त। ननु किरातोत्तमा घोरप्रचारे कान्तारे स्खलितपथः स्थविरभूसुरोऽहममपुत्रकं कुत्रचिच्छायायां निक्षिप्य मार्गान्वेषणाय किञ्चिदन्तरमगच्छम्। स कुत्रगतः केन वा गृहीतः परीक्ष्यापि न विद्यते। तन्मुखावलोकनसुखेन विनाऽनेकानि दिनान्यतीतानि किं करोमि क्व गच्छामि भवद्भिर्न किमदर्शीति। द्विजोत्तम कश्चिदत्रातिष्ठति किमेष तव नन्दनः सत्यमेव तदेतद्गृहाणेत्युक्त्वा दैवानुकूल्येन मह्यं तं व्यतरन्। तेभ्यो दत्ताशीरहं बालकमङ्गीकृत्य शिशिरोदकादिनोपचारेणाश्वास्य निःशङ्कं भवदङ्कं समानीतवानस्मि। एनमायुष्मन्तं पितृरूपो भवानभिरक्षतादिति राजा सुहृदापन्निमित्तं शोकं तन्नन्दनविलोकनसुखेन किञ्चित् सङ्कुचीकृत्य तमुपहारवर्मनाम्नाहूय

राजवाहनमिव पुपोष। जनपतिरेकस्मिन् पुण्यदिवसे तीर्थस्नानाय [शबरालय] निकटमार्गेण गच्छन्नवलया कयाचिदुपलालितमनुपमशरीरं कुमारं कञ्चिदवलोक्य कौतूहलाकुलस्तामपृच्छत्। भामिनि रुचिरमूर्त्तिः सराजगुणसंपूर्त्तिरसावर्भको भवदन्वयसम्भवो न भवति कस्य नयनानन्दो निमित्तेन केन दीनो भवदधीनो जातः कथ्यतां याथातथ्येन त्वयेति। प्रणतया तया शबर्य्या सलीलमलापि। राजन्नात्मपल्लीसमीपे पदव्यां वर्त्तमानस्य शक्रसमानस्य मिथिलेश्वरस्य सर्व्वस्वमपहरति शबरसैन्ये मद्दयितेनाऽपहृत्य कुमार एष मह्यमर्पितो व्यवर्द्धत। तदऽवधार्य्य कार्य्यज्ञो राजा मुनिकथितं द्वितीयं राजकुमारमेव निश्चित्य सामदानाभ्यान्तामनुनीयाऽपहारवर्म्मेत्याख्याय देव्यै वर्द्धयेति समर्पितवान्। कदाचिद्वामदेवशिष्यः सोमदेवशर्म्मा-नाम कश्चिदेकं बालकं राज्ञः पुरतो निक्षिप्याऽभाषत। देव रामतीर्थे स्नात्वा प्रत्यागच्छता मया काननावनौ वनितया कयापि धार्य्यमाणमेनमुज्ज्वलाकारं कुमारमवलोक्य सादरमभाषि। स्थविरे का त्वमेतस्मिन्नटवीमध्ये बालकमुद्वहन्ती किमर्थमाया-

---

[पक्कणेति क्वचित्पाठः।]

तेन भ्रमसीति। [वनितया] तयाऽप्यलापि। मुनिवर कालयवननाम्नि द्वीपे कालगुप्तो नाम धनाढ्यो वैश्यवरः कश्चिदस्ति। तन्नन्दिनीं नयनानन्दकारिणीं सुवृत्तां नामैतस्माद्द्वीपादागतः कश्चिन्मगधनाथमन्त्रिसम्भवो रत्नोद्भवो नाम रमणीयगुणालयो भ्रान्तभूवलयो मनोहारी व्यवहारी उपयम्य सुवस्तुसम्पदा श्वशुरेण संमानितोऽभूत्। कालक्रमेण नताङ्गी गर्भिणी जाता। ततः सहोदरविलोकनकौतुकेन रत्नोद्भवः कथञ्चिच्छ्वशुरमनुनीय चपललोचनयाऽनया सह प्रवहणमारुह्य पुष्पपुरमभिप्रतस्थे। कल्लोलमालिकाभिहतः पोतः समुद्राम्भस्यमज्जत्। गर्भविलासालसां ललनां धात्रीभावेन कल्पिताहं कराभ्यामुद्वहन्ती फलकमेकमधिरुह्य दैवगत्या तीरभूमिमगमम्। सुहृज्जनसहितो रत्नोद्भवस्तत्र निमग्नो वा केनोपायेन तीरदेशमगमद्वा न जानामि। क्लेशस्य परां काष्ठामधिगता सुवृत्ताऽस्मिन्नटवीमध्येऽद्य सुतमसूत। प्रसववेदनया विचेतना प्रच्छायशीतले लतातले निवसति। विजने वने स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुमुद्यतया मया विवशायास्तस्याः समीपे बालिश-

[दृढयेति क्वचित्पाठः।]

न्निक्षिप्य गन्तुमनुचितमिति कुमारोऽप्यनायीति। तस्मिन्नेव क्षणे वन्योवारणः कश्चिददृश्यत। तमव-लोक्य भीता सा तन्निपात्य प्राद्रवत्। अहमपि समीपलतागुल्मं प्रविश्य परीक्षमाणोऽतिष्ठम्। निपतितं बालकं पल्लवकबलमिवाऽददति गजपतौ कण्ठीरवो भीमरवो महाग्रहेण न्यपतत्। भयाऽ-कुलेन दन्तावलेन झटिति वियति समुत्पात्यमानो बालको न्यपतत्। चिरायुष्यतया सचोन्नततरुशा-खासमासीनेन वानरेण केनचित्पक्वफलमनीषया परिगृह्य [फलाभावेन] विततस्कन्धमूले निक्षिप्तोऽ-भूत्। सोऽपि मर्कटः कुत्राप्यगात्। बालकेन सत्वसम्पन्नतया सकलक्लेशसहेनाभावि। केशरिणा करिणं निहत्य कुत्रचिदगामि। लतागृहान्निर्ग-त्याऽहमपि तेजः पुञ्जं बालं शनैरवनीरुहादवतार्य्य वनान्तरे वनितामन्विष्याऽविलोक्यैनमानीय गुरवे निवेद्य तन्निदेशेन भवदन्तिकमानीतवानस्मीति। सर्व्वेषां सुहृदामेकदैवानुकूलदैवाऽभावेन महदाश्चर्य्य-म्बिभ्राणो राजा रत्नोद्भवः कथमभवदिति चिन्तय-न्तन्नन्दनं पुष्पोद्भवनामधेयम्बिधाय तदुदन्तं व्या-ख्याय सुश्रुताय विषादसन्तोषावनुभवन् तदनुजत-

---

[फलेतरयेति क्वचित्पाठः।]

नयं समर्पितवान्। अन्येद्युः कञ्चन बालकमुरसि दधती वसुमती वल्लभमभिगता। तेन कुत्रत्योऽयमिति पृष्टा समभाषत। राजन्नतीतायां रात्रौ काचन दिव्यवनिता मत्पुरतः कुमारमेनं संस्थाप्य निद्रामुद्रितां मां विबोध्य विनीताऽब्रवीत्। देवि त्वन्मन्त्रिणो धर्म्मपालनन्दनस्य कामपालस्य वल्लभा यक्षकान्ताऽहं तारावलीनाम नन्दिनी मणिभद्रस्य यक्षेश्वराऽनुमत्या मदात्मजमेनं भवत्तनूजस्याम्भोनिधिवलयवेष्टितक्षोणीमण्डलेश्वरस्य भाविनो विश्वहृदयशोनिधेः राजवाहनस्य परिचर्य्याकरणायाऽनीतवत्यस्मि। त्वमेनं मनोजसन्निभमभिवर्द्धयेति विस्मयविकसितनयनया मया सविनया सत्कृता स्वच्छी यक्षी साऽप्यदृश्यतामयासीदिति। कामपालस्य यक्षकन्यासंग्रहे विस्मयमानमानसो राजहंसो रञ्जितमित्रं सुमितं मन्त्रिणमाहूय तदीयभ्रातृपुत्रमर्थपालं विधाय तस्मै सर्व्ववार्त्ताजातं व्याख्यायादात्। ततः परस्मिन्दिवसे वामदेवान्तेवासी तदाश्रमवासी समाराधितदेवकीर्त्तिं निर्भर्त्सितमारमूर्त्तिं कुसुमसुकुमारं कुमारमेकमवगमय्य नरपतिमवादीत्। देवतीर्थयात्राऽभिलाषेण कावेरीतीरमागतोऽहं विलोलालकं बालकं निजोत्सङ्गतले निधाय रुदन्तीं स्थविरामेकां निरीक्ष्याऽवोचिषम्।

वनिते कात्वमयमर्भकः कस्य नयनानन्दकरः कान्ता-रद्दिमर्थमागता शोककारणं किमिति। सा कर-युगेन बाष्पजलमुत्सृज्य निजशोक शंकूत्पाटनक्षम-मिव मामवेक्ष्य शोकहेतुमवोचत्। द्विजोत्तम राज-हंससचिवस्य सितवर्मणः कनीयानात्मजः सत्य-वर्मा तीर्थयात्राकाङ्क्षया देशमेनमागच्छत्। स कस्मिंश्चिदग्रहारे कालींनामैकस्य भूसुरस्य नन्दिनीं विवाह्य तस्या अनपत्यतया गौरींनाम तद्भगिनीं काञ्चनकान्तिं परिणीय तस्यामेकं तनयमलभत। काली सासूयमेकदा धात्र्या मया सह बालमेनमेकेन विप्रेणानीय तटिन्यामेतस्यामक्षिपत्। करेणैकेन बालमुद्धृत्याऽपरेणाम्भसि प्लवमाना नदीवेगागतस्य कस्यचित्तरोः शाखामवलम्ब्य तत्र शिशुं निधाय नदी-वेगेनोह्यमाना केनचित्तरुलग्नेन कालभोगिनाऽहम-दंशि। मदवलम्बीभूतो भूरुहोयमस्मिन्देशे तीर-मगमत्। गरलस्योद्दीपनतया मयि मृतायाऽमरण्ये कश्चन शरण्यो नाऽस्तीति मया शोच्यत इति। ततो विषमविषोज्ज्वलज्वालावलीढाऽवयवा सा धरणी-तले न्यपतत्। दयाविष्टहृदयोहं मन्त्रबलेन विषव्य-वस्थामपनेतुमक्षमः समीपकुञ्जे औषधविशेषमन्वि-ष्य प्रत्याऽगच्छन्नुत्क्रान्तजीवितां तां व्यलोकयम्। तदनु तस्याः पावकसंस्कारं विरच्य शोकाकुलचेता

बालमेनमगतिमादाय सत्यवर्म्मवृत्तान्तश्रवणवेलायां तन्निवासाग्रहारनामधेयस्याऽश्रुततया तदन्वेषणमशक्यमित्याऽलोच्य भवदमात्यनन्दनस्य भवानेवाऽभिरक्षितेति भवन्तमेनमनयमिति। तन्निशम्य सत्यवर्म्मस्थितेः सम्यगनिश्चिततया खिन्नमना राजा सुमतये मन्त्रिणे सोमदत्तन्नाम तदनुजतनयमर्पितवान्। सोऽपि सोदरमागतमिव मन्यमानो विशेषेण पुपोष। एवं सति मिलितेन कुमारमण्डलेन सह बालकेलिमनुभवन्नधिरूढाऽनेकवाहनो राजवाहनोऽनुक्रमेण चौलोपनयनादिसंस्कारजातमलभत। ततः सकललिपिज्ञानं सकलदेशीयभाषापाण्डित्यषडङ्गसहितवेदसमुदायकोविदत्वं काव्यनाटकाख्यानकाख्यायिकेतिहासचित्रकथासमन्वितपुराणगणनैपुण्यं धर्म्मशब्दज्योतिस्तर्कमीमांसादिसमस्तशास्त्रनिकरचातुर्य्यं कौटिल्यकामन्दकीयादिनीतिपटलकौशलं वीणाद्यशेषवाद्यदाक्ष्यं संगीतसाहित्यहारित्वं मणिमन्त्रौषधादिमायाप्रपञ्चचाञ्चवम् मातङ्गतुरङ्गादिवाहनारोहणपाटवं विविधायुधप्रयोगचतुरत्वं चौर्य्यदुरोदरादिकपटकलाप्रौढत्वञ्च तत्तदाचार्य्येभ्यः सम्यग्लब्ध्वा यौवनेन विलसन्तं कृत्येष्वनलसन्तं कुमार-

निकरं निरीक्ष्य महीवल्लभः सोऽहं शत्रुजन दुर्लभ इति परमानन्दममन्द[मवापम्] ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते कुमारोत्पत्तिर्नाम प्रथमः उच्छ्वासः ॥ १ ॥

---

## द्विजोपकृतिर्नाम ।

### द्वितीयः उच्छ्वासः ।

अथैकदा वामदेवः सकलकलाकुशलेन कुसुमसायकसंशयितसौन्दर्य्येण कल्पितसोदर्य्येण सहसाऽपहसितकुमारेण सुकुमारेण जयध्वजातपवारणकलशाङ्कितकरेण कुमारनिकरेण परिवेष्टितं राजानमानतशिरसं समभिगम्य तेन ताङ्कृतां परिचर्य्यामङ्गीकृत्य निजचरणकमलयुगलमिलन्मधुकरायमानकाकपक्षं विदलिष्यमाणविपक्षं कुमारचयं गाढमालिङ्ग्याऽमितसत्यवाक्येन विहिताशीरभाषत । भूवल्लभ भवदीयमनोरथफलमिव समृद्धलावण्यं ता-

---

[मविन्दत इति क्वचित्पाठः] ।

रूप्यं सुतमित्रो भवत्पुत्रोऽनुभवति। सहचर-समेत्य नूनमेतस्य दिग्विजयारम्भसमय एषः। तदस्य सकलक्लेशसहनस्य राजवाहनस्य विजय-प्रयाणङ्क्रियतामिति। कुमारा माराभिरामा रा-मास्वपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमी-रणाभिद्याऽनेन तेनाऽभ्युदयाशंसं राजानमकार्षुः। तस्मात्त्वर्च्यमितरेषां विधाय समुचितां वृद्धिमुप-दिश्य शुभे मुहूर्त्ते सपरिवारं कुमारं विजयाय विससर्ज। राजवाहनो मङ्गलसूचकं शुभशकुनं विलोकयन् देशङ्कश्चिदतिक्रम्य विन्ध्याटवीमध्यमवि-शत्। तत्र हेतिहतिकिरणाङ्कं कालायसकर्कशकायं यज्ञोपवीतेनाऽनुमेयविप्रभावं व्यक्तकिरातप्रभावं लोचनपरुषं कमपिपुरुषं ददर्श। तेन विहितपूज-नो राजवाहनोऽभाषत। ननु मानव जनसङ्गरहिते मृगहिते घोरप्रचारे कान्तारे विन्ध्याटवीमध्ये भवानेकाकी किमिति निवसति। भवदंसोपनीतयज्ञो-पवीतं भूसुरभावं द्योतयति। हेतिततिभिः किरा-तरीतिरनुमीयते। कथय किमेतदिति। तेजो-मयोयं मानुषमात्रपौरुषो नूनं न भवतीति मत्वा स पुरुषस्तद्वयस्यमुखान्नामजनने विज्ञाय तस्मै निजवृत्तान्तमकथयत्। राजनन्दन केचिदस्याम-टव्यां वेदादिविद्याभ्यासमपहाय निजकुलाचारं

दूरीकृत्य सत्यशौचादि धर्म्मव्रतं परिहृत्य किल्बिष-मन्विष्यन्तः पुलिन्दपुरोगमास्तदन्नमुपभुञ्जाना बहवो ब्राह्मणब्रुवा निवसन्ति । तेषु कस्यचित्पुत्रो निन्द्यामात्रचारित्रो मातङ्गोनामाहं । स च किरात-बलेन जनपदं प्रविश्य ग्रामेषु धनिनः स्त्रीबालसहि-तानानीयाटव्यां बन्धने निधाय तेषां सकलधनमप-हरन् उद्धृत्य वीतदयो व्यचरम् । कदाचिदेक-स्मिन् कान्तारे मदीयसहचरगणेन जिघांस्यमानम् भूसुरमेकमवलोक्य दयायत्तचित्तोब्रुवं । ननु पापा नहन्तव्यो ब्राह्मण इति । ते रोषारुणनयना मां बहुधा निरभर्त्सयन् । तेषां भाषणपारुष्यमसहि-ष्णुरहमवनीसुररक्षणाय चिरं प्रयुध्य तैरभिहतो गतजीवितोऽभवम् । ततः प्रेतपुरीमुपेत्य तत्र देहधारिभिः पुरुषैः परिवेष्टितं सभामध्ये रत्नख-चितसिंहासनासीनं शमनं विलोक्य तस्मै दण्डप्रणा-ममकरवं । सोपि मामवेक्ष्य चित्रगुप्तं नाम निजा-मात्यमाहूय तमवोचत् । सचिव नैषोमुष्य मृत्युस-मयः । निन्दित चरितोप्ययम् महीसुरनिमित्तं गतजीवितोभूत् । इतः प्रभृति विगलित कल्मष-स्यास्य पुण्यकर्म्मकरणे रुचिरुदेष्यति । पापिष्ठैरनु-भूयमानमत्र यातनाविशेषं विलोक्य पुनरपि पूर्वश-रीरमनेन गम्यतामिति । चित्रगुप्तोपि तत्रतत्र सन्त-

प्रेष्वायसस्तम्भेषु बध्यमानान् अत्युष्णीकृते वितत-शरावे तैले निक्षिप्यमाणान् लगुडैर्जर्जरीकृतावय-वान् निशितटङ्कैः परितक्ष्यमाणानपि दर्शयित्वा पुण्यबुद्धिमुपदिश्य मामभुञ्चत्। तदेवपूर्वशरीरमहं प्राप्तो महाटवीमध्ये शीतलोपचारम् रचयता महीसुरेण परीक्ष्यमाणः शिलायां शयितः क्षण-मतिष्ठम्। तदनुविदितोदन्तोमदीयबन्धुगणः सहसा समागत्य मन्दिरमानीय मामपक्रान्तव्रणमकरोत्। द्विजन्मा कृतज्ञो मह्यमक्षरशिक्षां विधाय विविधागम-तन्त्रमाख्याय कल्मषक्षयकारणं सदाचारमुपदिश्य ज्ञानेक्षणगम्यमानस्य शशिखण्डशेखरस्य पूजावि-धानमभिधाय पूजां मत्कृतामङ्गीकृत्य निरगात्। तदारभ्याहं किरातकृतसंसर्गं बन्धुकुलवर्गमुत्सृज्य सकललोकैकगुरुमिन्दुकलावतंसं चेतसि स्मरन्न-स्मिन् कानने दूरीकृत कलङ्को वसामि। देव भवते विज्ञापनीयं रहस्यं किञ्चिदस्त्यागम्यतामिति सवयस्यगणादपनीय रहसि पुनरेवमभाषत। राज-न्नतीते निशान्ते गौरीपतिः स्वप्नसन्निहितोनिद्रा-मुद्रितलोचनं विबोध्य प्रसन्नवदनकान्तिः प्रश्रयाव-नतं मामवोचत्। मातङ्गदण्डकारण्यां तरालगा-मिन्यास्तटिन्यास्तीरभूमौ सिद्धसाध्याराध्यमानस्य स्फाटिकलिङ्गस्य पश्चादद्रिपतिकन्यापदपङ्क्तिचिह्नित-

स्यात्मनः सविधे विधेराननमिव किमपि विलम् विद्यते तत्प्रविश्य तत्र निहितम् ताम्रशासनं शासनं विधातुरिव समादाय विधिं तदुपदिष्टं दिष्टविजयमिव विधाय पातालोकाधीश्वरेण भवता भवितव्यम् भवत्साहाय्यकरो राजकुमारोद्यस्त्रो वा-समागमिष्यतीति। तदादेशानुगुणमेव भवदागमनमभूत्। साधनाभिलाषिणो मम तोषिणो रचय साहाय्यमिति। तथेति राजवाहनः साकं मातंगेन नमितोत्तमाङ्गेन विहायार्द्धरात्रे निद्रापरतन्त्रं मित्रगणं वनान्तरमवाप। तदनु तदनुचराः कल्ये साकल्येन राजकुमारमनवलोकयन्तो विषसहृदया-स्तेषु तेषु वनेषु सम्यगन्विष्याऽनवेच्यमाणा एतदन्वे-षणमनीषया देशान्तरं चारिष्णवो निश्चित पुनः सङ्केतस्थानाः परस्परं वियुज्य ययुः। लोकै-कवीरेण कुमारेण रच्यमाणः सन्तुष्टान्तरङ्गो मातङ्गोऽपि विलं शशिशेखरकथिताभिज्ञानपरिज्ञातं निःशङ्कं प्रविश्य गृहीतताम्रशासनो रसातलं पथा तेनैवोपेत्य तत्र कस्यचित् पतनस्य निकटे केलीकानन कासारस्य विततसारसस्य समीपे नानाविधेनशासा-सनविधानोपपादितेन हविषा होमं विरच्य प्रत्यूह-परिहारिणि सविस्मयं विलोकयति राजवाहने समिदाज्यसमुज्ज्वलिते ज्वलने पुण्यगेहं देहं मन्त्र-

पूर्वक माङ्कतीकृत्य तडित्समानकान्तिं दिव्यां तनुमलभत। तदनु मणिमयमण्डनमण्डलमण्डिता सकललोकललनाकुलललामभूता कन्यका काचनविनीतानेकसखीजनानुगम्यमाना कलहंसगत्या शनैरागत्यावनिसुरोत्तमाय मणिमेकमुज्ज्वलाकारमुपायनीकृत्यानेन कान्तामतिहृष्टा सोत्कण्ठा कलकण्ठस्वनेन मदं मन्दमुदञ्जलिरभाषत। भूसुरोत्तमाहमसुरोत्तमनन्दिनी कालिन्दीनाम मम पिताऽस्य लोकस्य शासिता महानुभावो निजपराक्रमासहिष्णुना विष्णुना दूरीकृतामरे समरे यमनगरातिथिरकारि। तद्वियोगशोकसागरमग्नां मामवेक्ष्य कोपि कारुणिकः सिद्धतापसोऽभाषत। बाले कश्चिद्दिव्यदेहधारी मानवो नवो वल्लभस्तव भूत्वा सकलं रसातलं पालयिष्यतीति। तदादेशं निशम्य घनशब्दोन्मुखी चातकी वर्षागमनमिव तवालोकनकाङ्क्षिणी चिरमतिष्ठम्। मन्मनोरथफलायमानं भवदागमनमवगम्य मद्राज्यावलम्बनभूतामात्यानुमत्या मदनकृतसारथ्येन मनसा भवन्तमागच्छम्। लोकस्यास्य राजलक्ष्मीमङ्गीकृत्य मां तत्सत्पत्नीं करोतु भवानिति। मातङ्गोपि राजवाहनानुमत्या तां तरुणीं परिणीय दिव्यांगनालाभेन हृष्टतरो रसातलराज्यमुररीकृत्य परमानन्दमाससाद। वस-

यित्वा वयस्यगणं समागतो राजवाहनस्तदवलोकनकौतूहलेन भुवंगमिषुः कालिन्दीदत्तं क्षुत्पिपासादिक्लेशनाशनं मणिं साहाय्यकरणसन्तुष्टान्मातङ्गादवाप्य कञ्चनाध्वानमनुवर्त्तमानं तं विसृज्य विलपथेन तेन निर्ययौ। तत्र च मित्रगणमनवलोक्य भुवं बभ्राम। भ्रमंश्च विशालोपशल्यैकमप्याक्रीडमासाद्य तत्र विश्रिश्रमिषुरान्दोलिकारूढं रमणीसहितमाप्तजनपरिवृत्तमुद्याने समागतमेकं पुरुषमपश्यत्। सोपि परमानन्देन पल्लवितचेता विकसितवदनारविन्दो मम स्वामी सोमकुलावतंसो विशुद्धयशोनिधी राजवाहन एष महाभाग्यतया काण्ड एवास्य पादमूलं गतवानस्मि। सम्प्रति महान्नयनोत्सवो जात इति ससम्भ्रममान्दोलिकाया अवतीर्य्य सरभसपदविन्यासविलासिहर्षोत्कर्षचरितस्त्रिचतुःपदान्युद्गतस्य चरणकमलयुगलं गलदुल्लसन्मल्लिकावलयेन मौलिना पस्पर्श। प्रमोदाश्रुपूर्णो राजा पुलकिताङ्गं तं गाढमालिङ्ग्याऽये सौम्य सोमदत्त इति व्याजहार। ततः कस्यापि पुन्नागभूरुहस्य छायाशीतले तले संविष्टेन मनुजनायेन सप्रणयमभाणि। सखे कालमेतावन्तं देशे कस्मिन् प्रकारेण केनास्थायि। भवता सम्प्रति कुत्र गम्यते तरुणीकेयमेषपरिजनः सम्पादितः

२

कथं कथयेति। सोऽपि मित्रसन्दर्शनव्यतिकरापगतचिन्ताज्वरातिशयो मुकुलितकरकमलः सविनयमात्मीयप्रचारप्रकारमवोचत्।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते द्विजोपकृतिर्नाम द्वितीय उच्छ्वासः।

---

## सोमदत्तचरितं नाम।

### तृतीय उच्छ्वासः।

देव भवच्चरणकमलसेवाभिलाषी भूतोऽहं भ्रमन्नेकस्यां वनावनौ पिपासाकुलो लतापरिवृत्तं शीतलं नदसलिलं पिबन्नुज्ज्वलाकारं रत्नं तत्रैकमद्राक्षम्। तदादाय गत्वा कञ्चनाध्वानमम्बरमणे[रत्युत्फुल्लतया]गन्तुमक्षमो वनेऽस्मिन्नत्र किमपि देवतायतनं प्रविष्टो दीनाननं बहुतनयसमेतं स्थविरमहीसुरमेकमवलोक्य कुशलमुदितदयोऽहमपृच्छम्। कार्पण्यविवर्णवदनो महदाशापूर्णमानसोऽवोचदग्रजन्मा। महाभाग सुतानेतान् मातृहीनान् अनेकैरुपायैरक्षन्निदानीमस्मिन्कुदेशे भैक्ष्यं सम्पा-

---

[रत्युष्णतयेति पाठान्तरम्।]

द्य ददद्देतेभ्यो वसामि शिवालयेऽस्मिन्निति । भूदेव एतत्कटकाधिपतीराजा कस्य देशस्य किं नामधेय किमत्रागमनकारणमस्येति पृष्टोभाषत महीसुरः । सौम्य मत्तकालो नाम लाटेश्वरो देशस्यास्य पालयितुर्वीरकेतोस्तनयां वामलोचनां नाम तरुणीरत्नमसमानलावण्यं श्रावं श्रावमवधूतदुहितृप्रार्थनस्य तस्य नगरीमरौत्सीत् । वीरकेतुरपि भीतो महदुपायनमिव तनयां मत्तकालायादात् । तरुणीलाभहृष्टचेता लाटपतिः परिणेया निजपुर एवेति निश्चित्य गच्छन् निजदेशं प्रति सम्प्रति मृगयादरेणात्र वने सैन्यवासमकारयत् । कन्याऽसारेण नियुक्तो मानपालो नाम वीरकेतुमन्त्री मानधनश्चतुरङ्गबलसमन्वितोऽन्यत्ररचितशिविरस्तं निजनाथावमानखिन्नमानसोन्तर्व्विभेदेति विप्रोऽसौ बहुतनयोविद्वान् निर्द्धनः स्थविरश्च दानयोग्य इति तस्मै करुणापूर्णमना रत्नमदाम् । परमाह्लादविकसितानोऽभिहिताऽनेकाशीः कुत्रचिदग्रजन्मा जगाम । अध्वश्रमखिन्नेन मया तत्र निरवेशि निद्रासुखं । तदनु पश्चान्निगलितबाहुयुगलः स भूसुरः कशाघातचिह्नितगात्रोनेकनैस्त्रिंशिकानुयातोऽभ्येत्य मामसौ दस्युरित्यदर्शयत् । परित्यक्तभूसुराराजभटा रत्नावाप्तिप्रकारं मदुक्तमनाकर्ण्यभय-

रहितं मां गाढं नियम्य रज्जुभिरानीय कारागार-मेते तत्र सखाय इति निगड़ितान् कांश्चिन्निर्दिष्ट-वन्तो मामपि निगडितचरणयुगलमकार्षुः। किं कर्त्तव्यता मूढेन निराशक्लेशानुभवेनावोचि मया। ननु पुरुषाः वीर्य्यपरुषाः निमित्तेन केन निर्दिश्य कारावासदुःखं दुस्तरम् यूयं वयस्या इति निर्दि-ष्टमेतैः किमिदमिति। तथा विधं मामवेक्ष्य भूसु-रान्मया श्रुतं लाटपतिवृत्तान्तं व्याख्याय चौर-वीराः पुनरवोचत्। महाभाग वीरकेतुमन्त्रिणो मानपालस्य किंकरावयं तदाज्ञया लाटेश्वरमार-णाय रात्रौ सुरुङ्गद्वारेण तदगारं प्रविश्य तत्र राजाऽभावेन विषण्णा बहुधनमपहृत्य महाटवीं प्रविशामः। अपरेद्युस्तान्वेषिणो राजानुचरा बह-वोऽभ्येत्य धृतधनचयान् अस्मान् परितः परिवृत्य दृढतरं वध्वा निकटमानीय समस्तवस्तुशोधनवेला-यामेकस्यानर्घरत्नस्याभावेनास्मद्वधाय माणिक्या-दानायास्मान् किलाशृङ्खलयन्निति श्रुतरत्न रत्ना-लोकनस्थानोऽहमिदं तदेव माणिक्यमिति निश्चित्य भूदेवदाननिमित्तां दुरवस्थामात्मनोजन्म नामधेयं यु-ष्मदन्वेषणपर्य्यटनप्रकारं चाऽऽभाष्य समयोचितैःसंला-पैर्मैत्रीमकार्षं। ततोऽर्द्धरात्रे तेषां मम च शृङ्खलव-न्धनं निर्भिद्य तैरनुगम्यमानो निद्रितस्य द्वाःस्थगण-

स्त्रायुधजालमादाय पुररक्षान्युरतोभिमुखागतान् पटुपराक्रमलीलयाभिद्राव्य मानपालशिविरं प्राविशम्। मानपालो निजकिङ्करेभ्यो मम कुलाभिमानवृत्तान्तं तत्कालिकविक्रमं च निशम्य मामर्चयत्। परेद्युर्मत्तकालेन प्रेषिताः केचनपुरुषा मानपालमुपेत्य मन्त्रिन् मदीयराजमन्दिरे सुरुङ्गया बहुधनमपहृत्य चौरवीरा भवदीयकटकं प्राविशन् तानर्पय नोचेन्महाननर्थः सम्भविष्यतीति क्रूरतरं वाक्यमब्रुवन्। तदाकर्ण्य रोषारुणितनेत्रो मन्त्री लाटपतिः कस्तेन मैत्री का पुनरस्य वराकस्य सेवया किं लभ्यमिति तान्निरभर्त्सयत्। ते मानपालेनोक्तं विप्रलापं मत्तकालाय तथैवाऽकथयन्। कुपितोऽपि लाटपतिर्दोर्वीर्यगर्वेणाल्पसैनिकसमेतो योद्धुमभ्यगात्। पूर्वमेव कृतरणनिश्चयो मानी मानपालः सन्नद्धयोधो युद्धकामो भूत्वा निःशङ्कं निरगात्। अहमपि स बहुमानं मन्त्रिदत्तातिबहुलतुरङ्गमोपेतं चतुरसारथिं रथं च दृढतरं कवचं मदनुरूपञ्चापं च विविधबाणपूर्णं तूणीरद्वयं रणसमुचितान्यायुधानि गृहीत्वा युद्धसन्नद्धो मदीयबलविश्वासेन रिपूद्धरणोद्युक्तं मन्त्रिणमन्वगाम्। परस्परमत्सरेण तुमुलसङ्गरकरमुभयसैन्यमऽतिक्रम्य समुल्लसद्भुजाटोपेन बाणावर्षं तदङ्गे विमुञ्चन्नरा-

तीन्प्राहरं। ततो तिरयतुरङ्गमं मद्रथं तन्निकटं नीत्वा शीघ्रलङ्घनोपेततदीयरथोऽहमरातेः शिरः कर्त्तनमकार्षम्। तस्मिन्निपतिते तदावशिष्टसैनिकेषु पलायितेषु नानाविधहयगजादिवस्तुजातमादाय परमानन्दसन्दतोमन्त्री समानेकसंविधां सम्भावनामकार्षीत्। मानपालप्रेषितात्तदनुचरादेनमखिलमुदन्तमाकर्ण्य सन्तुष्टमना राजाभ्युहतो मदीयपराक्रमे विस्मयमानः समहोत्सवममात्यबान्धवानुमत्या शुभदिने निजतनयां मह्यमदात्। ततो यौवराज्याभिषिक्तोऽहमनुदिनमाराधितमहीपालचित्तो वामलोचनयाऽनया सह नानाविधं सौख्यमनुभवन् भवद्विरहवेदना शल्यसुलभवैकल्यहृदयः सिद्धादेशेनसुहृज्जनावलोकनफलप्रदेशं महाकालनिवासिनः परमेश्वरस्याराधनयाऽद्यपत्नीसमेतः समागतोऽस्मि। भक्तवत्सलस्य गौरीपतेः कारुण्येन भवत्पदारविन्दसन्दर्शनानन्दसन्दोहो मया लब्ध इति। तन्निशम्य अभिनन्दितपराक्रमो राजवाहनस्तन्निरपराधदण्डे दैवमुपालभ्य तस्मै क्रमेणात्मचरितं कथयामास। तस्मिन्नवसरे पुरतः पुष्पोद्भवं विलोक्य ससम्भ्रमं निजनिटिलतटस्पृष्टचरणाङ्गुलिमुदञ्चलिममुं गाढमालिङ्ग्यानन्दवाष्पसङ्कुलसंफुल्ललोचनः सौम्य सोमदत्तायं सपुष्पोद्भव इति तस्मैतं दर्शया-

मास। तौच चिरविरहदुःखं विसृज्यान्योन्याऽलि-ङ्गनसुखमन्वभूताम्। ततस्तस्यैव महीरुहस्य छा-यायामुपविश्य राजा सादरहासमभाषत। वयस्य भूसुरकार्य्यं करिष्णुरहं मित्रगणो विदितोर्थः सर्व्वथान्तरायं करिष्यतीति निद्रितान् भवतः परि-त्यज्य निरगाम्। तदनुप्रबुद्धो वयस्य वर्गः कि-मिति निश्चित्य मदन्वेषणाय कुत्रगतवान् भवाने-काकी क्वागत इति सोपि ललाटतटचुम्बदञ्जलिपुटः सविनयं समालपत्।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते सोम-दत्तचरितं नाम तृतीयोच्छ्वासः॥ ३॥

# पुष्पोद्भवचरितं नाम ।

## चतुर्थ उच्छ्वासः ।



देव महीसुरोपकारायैव देवो गतवानिति निश्चित्यापि देवेन गन्तव्यदेशं निर्णेतुमशक्नुवानो मित्रगणः परस्परं वियुज्य दिक्षु देवमन्वेष्टुमगच्छत् । अहमपि देवस्यान्वेषणाय महीमटन् कदाचिदम्बरमध्यागतस्याम्बरमणेः किरणमसहिष्णुरेकस्य गिरितटमहीरुहस्य प्रच्छायशीतले तले क्षणमुपाविशं । मम पुरोभागे दिनमध्यसङ्कुचितसर्वावयवां सूर्य्याकृतिं मानुषच्छायां निरीक्ष्योन्मुखो गगनतलान्महारयेणपततं पुरुषं कञ्चिदन्तराल एव दयोपनत हृदयोऽहमवलम्ब्य शनैरवनितलेनिक्षिप्य दूरापातवीतसंज्ञं तं शिशिरोपचारेण विबोध्य शोकातिरेकेणोद्गतवाष्पलोचनं तं भृगुपतनकारणमपृच्छम् । सोपि कररुहैरश्रुकणानपनयन्नभाषत । सौम्य मगधाधिनाथामात्यस्य पद्मोद्भवस्यात्मसम्भवो रत्नोद्भवो नामाहं वाणिज्यरूपेण कालयवनद्वीपमुपेत्य कामपि वणिक्कन्यकां परिणीय तया

सह प्रत्यागच्छन्नं बुधौ तीरस्यानतिदूर एव प्रवहणस्य मग्नतया सर्वेषु निमग्नेषु कथं कथमपि दैवानुकूल्येन तीरभूमिमभिगम्य निजाङ्गना वियोगदुःखार्णवे प्लवमानः कस्यापि सिद्धतापसस्यादेशाद्दरेण षोडशहायनानि कथञ्चिन्नीत्वा दुरवस्थापारमनवेक्ष्यमाणो गिरिपतनमकार्षमिति। तस्मिन्नेवावसरे किमपि नारीकूजितमश्रावि। न खलु समुचितमिदं यत्सिद्धादिष्टे पतितनयमिलने विरहमसहिष्णुर्वैश्वानरं विशसीति तन्निशम्य मनोविदितजनकभावं तमवादिषं। तात भवते विज्ञापनीयानि बहूनि सन्ति। भवतुपश्चादखिलमाख्यातव्यं अधुना नारीकूजितमनुपेक्षणीयं मया क्षणमात्रमत्रस्थीयतामिति तदनु सोऽहं त्वरया किञ्चिदन्तरमगमं। तत्र पुरतो भयङ्करज्वालाकुलहुतभुगवगाहमानसाहसिकां मुकुलिताञ्जलिपुटां वनितां काञ्चिदवलोक्य ससंभ्रममनलादपनीय कूजन्त्या वृद्धया सह मत्पितुरभ्यर्णमभिगमय्य स्थविरामवोचम्। वृद्धे भवत्यौ कुत्रत्ये कान्तारे निमित्तेन केन दुरवस्थानुभूयते कथ्यतामिति। सा सगद्गदमवादीत्। पुत्र कालयवनद्वीपे कालगुप्तनाम्नो वणिजः कस्यचिदेषा सुता सुवृत्ता नाम रत्नोद्भवेन निजकान्तेनागच्छन्ती जलधौ मग्ने प्रवहणे निज-

धात्र्या मया सह फलकमेकमवलम्ब्य दैवयोगेन कूल-मुपेता आसन्नप्रसवसमया कस्याञ्चिदटव्यामा-त्मजमसूत। ममतु मन्दभाग्यतया बाले वनमात-ङ्गेन गृहीते न द्वितीयापरिभ्रमन्ती षोडशवर्षान-न्तरं भर्तृपुत्रसङ्गमो भविष्यतीति सिद्धवाक्यविश्वा-सादेकस्मिन् पुण्याश्रमे तावन्तं समयं नीत्वा शोक-मपारं सोढुमक्षमा समुज्ज्वलिते वैश्वानरे शरीर-माहुती कर्तुमुद्युक्तासीदिति। तदाकर्ण्य निज-जननीं ज्ञात्वा तामहं दण्डवत्प्रणम्य तस्यै मदुदन्त-मखिलमाख्याय धात्रीभाषणफुल्लवदनं विस्मयविक-सिताक्षं जनकमदर्शयं। पितरौ तौ साभिज्ञान-मन्योन्यं ज्ञात्वा मुदितान्तरात्मानौ विनीतं मा-मानन्दाश्रुवर्षेणाऽभिषिच्य गाढमाश्लिष्य शिरस्युपा-घ्राय कस्याञ्चिन्महीरुहच्छायायामुपाविशतां। कथं निवसति महीवल्लभो राजहंस इति जनकेन पृष्टोऽहं तस्य राज्यच्युतिं त्वदीयजननं सकलकुमारा-वाप्तिं तव दिग्विजयारम्भं च भवतो मातङ्गानुयान-मस्माकं युष्मदन्वेषणकारणं सकलमभ्यधां। तत-स्तौ कस्यचिदाश्रमे मुनेरस्थापयम्। ततो देवस्या-न्वेषणपरायणोऽहमखिलकार्य्यनिमित्तं वित्तं निश्चित्य भवदनुग्रहाल्लब्धस्य साधकत्वस्य साहाय्यकरणदक्षं-शिष्यगणं निष्पाद्य विन्ध्यवनमध्ये पुरातनपदस्था-

नान्युपेत्य विविधनिधिसूचकानां महीरुहाणामध्ये निक्षिप्तान् वसुपूर्णान् कलशान् सिद्धाञ्जनेन ज्ञात्वा रक्षिषु परितः स्थितेषु खननसाधनैरुत्पाद्य दीनारानसङ्ख्यान् राशीकृत्य तत्कालगतमनति-दूरे निवेशितवणिक्कटकं कश्चिदभ्येत्य तत्र बलिनो बलीवर्दान् गोणीश्चक्रीत्वाऽन्यद्रव्यमिषेण वसु तद्गो-णीसञ्चितं तैरुह्यमानं शनैः कटकमनयं । तदधि-कारिणा चन्द्रपालेन केनचिद्वणिक्पुत्रेण विर-चितसौहृदोऽहममुनैव साकमुज्जयिनीमुपाविशं । मत्पितरावपि तां पुरीमभिगमय्य सकलगुणनिल-येन बन्धुपालनाम्ना चन्द्रपालजनकेन नीयमानो मालवनाथदर्शनं विधाय तदनुमत्या गूढवसतिमक-रवं । ततः काननभूमिषु भवन्तमन्वेष्टुमुद्युक्तं मां परममित्रं बन्धुपालो निशम्याऽवदत् । सकलधरणी-तलमपारमन्वेष्टुमक्षमो भवान् मनो ग्लानिं विहाय तूष्णीं तिष्ठतु । भवन्नायकालोकनकारणं शुभश-कुनं निरीक्ष्य कथयिष्यामीति । तन्निवितास्वा-सितहृदयोऽहमनुदिनं तदुपकण्ठवर्त्ती कदाचि-दिन्दुमुखीं नवयौवनावलीढावयवां नयनचन्द्रिकां नाम तरुणीरत्नं वणिक्मन्दिरलक्ष्मीं मूर्त्तामवलोक्य तदीयलावण्यावधूतधीरभावो लतान्तबाणबाण लक्ष्यतामयासिषं चकितबालकुरङ्गलोचना सापि

कुसुमसायकसायकायमानेन कटाक्षवीक्षणेन मा-
मसकृन्निरीक्ष्य मन्दमारुतान्दोलितालतेवाकम्पत।
मनसाभिमुखैः समाकुञ्चितैरागलज्जान्तरालवर्त्तिभिः
साङ्गभङ्गिभिरीक्षणविशेषैर्निजमनोवृत्तिमकथयत्।
चतुरगूढचेष्टाभिरस्या मनोनुरागं सम्यक् ज्ञात्वा
सुखसङ्गमोपायमचिन्तयं। अन्यदा बन्धुपालः
शकुनैर्भवद्गतिं प्रेक्षिष्यमाणः पुरीयान्तं विहारवनं
मया सहोपेत्य कस्मिंश्चिन्महीरुहे शकुन्तवचनानि
शृण्वन्नतिष्ठत्। अहमुत्कलिकाविनोदपरायणो
वनान्ते परिभ्रमन् सरोवरतीरे चिन्ताक्रान्तचित्तां
दीनवदनां मन्मनोरथैकभूमिं बालचन्द्रिकां व्यलो-
कयम्। तस्याः ससम्भ्रमप्रेमलज्जाकौतुकमनोरम
लीलाविलोकनसुखमनुभवन् सुदत्या वदनारविन्दे
विषण्णभावं मदनकदनखेदानुभूतं ज्ञात्वा तं नि-
मित्तं ज्ञास्यं ल्लीलया तदुपकण्ठमुपेत्याऽवोचिषं।
सुमुखि तव मुखारविन्दस्य दैन्यकारणं कथयेति।
सा रहस्य सञ्जातविस्रम्भतया विहाय लज्जाभये
शनैः अभाषत। सौम्य मानसारो मालवाधीशो
वार्द्धकस्य प्रबलया निजनन्दनं दर्पसारमुज्जयिन्या-
मभ्यषिञ्चत्। स कुमारः सप्तसागरपर्य्यन्तं मही-
मण्डलं पालयिष्यन् निजपैतृष्वसेयावुद्दण्डकर्माणौ
चण्डवर्म्मदारुवर्म्माणौ धरणीभरणे नियुज्य तपस्य-

रणाय राजगिरिमभ्यगात्। राज्यं सर्व्वमसपत्नं शासति चण्डवर्म्मणि दारुवर्म्मा मातुलाग्रजन्मनोः शासनमतिक्रम्य पारदार्यपरद्रव्यापहरणादिदुष्कर्म्म कुर्व्वाणो मन्मथसमानस्य भवतो लावण्यायत्तचित्तां मामेकदा विलोक्य कन्यादूषणदोषं दूरीकृत्य बलात्कारेण रन्तुमुद्युङ्क्ते। तच्चिन्तया दैन्यमगच्छमिति। तस्या मनोगतं मयि रागोद्रेकं मन्मनोरथसिद्ध्यन्तरायं च निशम्य बाष्पपूर्णलोचनामाश्वास्य दारुवर्म्मणो मारणोपायं च विचार्य्य वल्लभामवोचं। तरुणि भवदभिलाषिणं दुष्टहृदयमेनं निहन्तुं मृदुरुपायः कश्चिन्मया चिन्त्यते। यक्षः कश्चिदधिष्ठाय बालचन्द्रिकां निवसति तदाकारसम्पदाशाशृङ्खलितहृदयो यः सम्बन्धयोग्यः साहसिको रतिमन्दिरे तं यक्षं निर्जित्य तयैकसखीसमेतया मृगाक्ष्या संलापामृतसुखमनुभूय कुशली निर्गमिष्यति। तेन चक्रवाकसंशयाकारपयोधरा विवाहनीयेति सिद्धेनैकेनावादीति पुरजनस्य पुरतो भवदीयैः सत्यवाक्यैरसकृत्कथनीयम्। तदनु दारुवर्म्मा वाक्यानीत्थं विधानि श्रावं श्रावं तूष्णीं यदि भिया स्थास्यति तर्हि वरं। यदि वा दौर्जन्येन त्वया सङ्गमङ्गीकरिष्यति तदा भवदीयैरित्थं वाच्यः। सौम्य दर्पसारवसुधाधिपामात्यस्य भवतोऽस्मिन्निवासे

साहसकरणमनुचितं पौरजनसाक्षिकं भवन्मन्दि-
रमानीतयाऽनया तोयजाक्ष्या सह क्रीडन्नायुष्मा-
न्यदि भविष्यसि तदा परिणीय तरुणीं मनोरथा-
न्निर्विघ्नान्निशीथे तदङ्गीकरिष्यति। त्वं सखीवेष-
धारिणा मया सह तस्य मन्दिरं गच्छ। अह-
मेकान्तनिकेतने मुष्टिजानुपादाघातैस्तं रभसा
निहत्य पुनरपि वयस्यावेषेण भवतीमनु निःशङ्कं
निर्गमिष्यामि। तदेनमुपायमङ्गीकृत्य विगतसाध्व-
सलज्जा भवज्जनकजननीसहोदराणां पुरत आवयोः
प्रेमातिशयमाख्याय सर्वथाऽस्मत्परिणयकरणे तान-
नुनय। तेऽपि वंशसम्पल्लावण्याढ्याय यूने मह्यं त्वां
दास्यन्त्येव दारुवर्मणो मरणोपायं तेभ्यः कथयित्वा
तेषामुत्तरमाख्येयं मह्यमिति। सापि किञ्चिदु-
त्फुल्लसरसिजानना मामब्रवीत्। सुभग क्रूरकर्माणं
दारुवर्माणं भवानेव हन्तुमर्हति तस्मिन् हते
सर्वथा युष्मन्मनोरथः फलिष्यति एवं क्रियताम्।
भवदुक्तं सर्वमहमपि तथा करिष्य इति मां सस-
क्षद्दिष्टवदना विलोकयन्ती मन्दं मन्दमगारम-
गात्। अहमपि बन्धुपालमुपेत्य शकुनज्ञात्तस्मा-
त्त्रिंशद्दिवसानन्तरमेव भाग्यसङ्गः सम्भविष्यतीत्य-
श्रौषं। तदनु मदनुगम्यमानो बन्धुपालो निजावासं
प्रविश्य मामपि निलयाय विससर्ज। यन्मायोपा-

यवागुरापाशलग्नेन दारुवर्म्मणा । रतिमन्दिरे रन्तुं समाहूता बालचन्द्रिका तं गमिष्यन्ती दूतिकां मन्निकटमभिप्रेषितवती अहमपि मणिनूपुरमेखला-कङ्कणकटकताटङ्कहारक्षौमकज्जलं वनितायोग्यं मण्डनजातं निपुणतया तत्तत्स्थानेषु निक्षिप्य सम्यगङ्गीकृत्यं मनोज्ञवेषो वल्लभया सह तदागारद्वा-रोपान्तमगच्छं । द्वाःस्थ कथिताख्मदागमनेन सादरं विहिताभ्युद्गतिना तेन द्वारोपान्तनिवारिताशेष-परिवारेण मदन्विता बालचन्द्रिका सङ्केतागारमनी-यत । नगरव्याकुलां यच्चकयां परीच्छन्नागरिक-जनोपि कुतूहलेन दारुवर्म्मणः प्रतीहारभूमिमग-मत् । विवेकशून्यमतिरसौ रागातिरेकेण रत्नख-चितहेमपर्य्यङ्के हंसतूलगर्भशयनमानीय तरुणीं तस्यै मह्यं तस्मिन्नासम्यगनवलोकितपुम्भावाय मनोरमस्त्रीवेषाय च चामीकरमणिमयमण्डनानि सूक्ष्माणि चित्रवस्त्राणि कस्तूरिकामिलितहरिच-न्दनं कर्पूरसहितं ताम्बूलं सुरभीणि कुसुमाणि ललितं वस्तुजातं समर्प्य मुहूर्त्तद्वयमात्रं हासवचनैः संलपन्नतिष्ठत् ॥ ततो रागान्धतया सुमुखीकुच-ग्रहणे मतिं व्यधत्त । रोषारुणितोऽहमेनं पर्य्यङ्क-तलान्निःशङ्को निपात्य मुष्टिजानुपादाघातैः प्राहरं । नियुद्धरभसविकलमलङ्कारं पूर्व्ववदुन्मीलयित्वा

भयकम्पितां नताङ्गीमुपलालयन् मन्दिराङ्गणमुपेतः साध्वसकम्पित इवोच्चैरकूजं। हाबालचन्द्रिका-धिष्ठितेन घोराकारेण यक्षेण दारुवर्म्मा निहन्यते सहसा समागच्छत पश्यतेति। तदाकर्ण्य मिलि-ताः जनाः समुद्यद्वाष्पाः हाहानिनादेन दिशो वधिरयन्तो बालचन्द्रिकामधिष्ठितं यक्षं बलवन्तं शृण्वन्नपि दारुवर्म्मा मन्दान्धस्तामेवायाचत। तदसौ स्वकीयेन कर्म्मणा निहतः किं तस्य विला-पेनेति मिथो लपन्तः प्राविशन्। कोलाहले तस्मिन् चटुललोचनया सह नैपुण्येन सहसा निर्गतो नि-जावासमगां। ततो गतेषु कतिपयदिनेषु पौर-जनसमक्षं सिद्धादेशप्रकारेण विवाह्य तामिन्दुमुखीं पूर्व्वसङ्कल्पितान् सुरतविशेषान् यथेष्टमन्वभवं। बन्धुपालशकुननिर्दिष्टे दिवसेऽस्मिन्निर्गत्य पुराद्बहि-र्वर्त्तमानो नेत्रोत्सवकारिभवदवलोकनसुखमनुभवा-मीति। एवं मित्रवृत्तान्तं निशम्याऽम्लानमनसो राजवाहनः स्वस्य च सोमदत्तस्य च वृत्तान्तमस्मै निवेद्य सोमदत्तं महाकालेश्वराराधनानन्तरं भव-द्वल्लभां सपरिवारां निजकटकं प्रापय्यागच्छेति नि-युज्य पुष्पोद्भवेन सेव्यमानो भूस्वर्गायमानमवन्ति-कापुरं विवेश। तत्रायं मम स्वामिकुमार इति बन्धुपालादये बन्धुजनाय कथयित्वा तेन राजवा-

हनाय बहुविधां सपर्य्याङ्कारयन् सकलकलाकुशलो महीसुरवर इति पुरि प्रकटयन् पुष्पोद्भवोऽमुष्य-राज्ञो मज्जनभोजनादिकमनुदिनं स्वमन्दिरे कारयामास ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते पुष्पोद्भवचरितं नाम चतुर्थोच्छ्वासः ॥ ४ ॥

---

## राजवाहनचरितेऽवन्तिसुन्दरी विवाहो नाम

### पञ्चम उच्छ्वासः ।

---

अथमीनकेतनसेनानायकेन मलयगिरिमहीरुहान्तरावासि भुजङ्गभुक्तावशिष्टेनेव सूक्ष्मतरेण धूतहरिचन्दनपरिमलभरेणेव मन्दगतिना दक्षिणानिलेन वियोगिहृदयस्थं मन्मथानलमुज्ज्वलयन् सहकारकिसलयमकरन्दास्वादनरक्तकण्ठानां मधुकरकलकण्ठानां काकलीकलकलेन दिक्चक्रं वाचालयन् मानिनीमानसोत्कलिकामुपनयन् माकन्दसिन्दुवाररक्ताशोक किंशुकतिलकेषु कलिकामुपपादयन् मदनमहोत्सवाय रसिकमनांसि समुल्लासयन् वसन्तसमयः समाजगाम । तस्मिन्नतिरमणीये कालेऽवन्तीसुन्दरीनाम मानसारनन्द

नी प्रियवयस्यया बालचन्द्रिकया सह नगरोपान्ते रम्योद्याने विहारोत्कण्ठया पौरसुन्दरीसमवायसमन्विता कस्यचिच्चूतपोतकस्य छायाशीतले सैकततले गन्धकुसुमहरिद्राचतचीराम्बरादिना नानाविधेन परिमलद्रव्यनिकरेण मनोभवमर्चयन्ती रेमे। तत्र रतिप्रकृतिमवन्तिसुन्दरीं द्रष्टुकामः काम इव वसन्तसहायः पुष्पोद्भवसमन्वितो राजवाहनस्तदुपवनं प्रविश्य तत्र तत्र मलयमारुतान्दोलितशाखानिरन्तरसमुद्भिन्नकिसलयकुसुमफलसमुल्लासितेषु रसालतरुषु कोकिलकीरालिकुलमधुकराणामालापान् श्रावं श्रावं किञ्चिद्विकसदिन्दीवरकह्लारकैरवराजीवराजिकेलिलोलकलहंससारसकारण्डवचक्रवाकचक्रवालकलरवव्याकुलविमलशीतलसलिलललितानि सरांसि दर्शं दर्शममन्दलीलया ललनासमीपमवाप। बालचन्द्रिकया निःशङ्कमित आगम्यतामिति हस्तसंज्ञया समाहूतो निजतेजोजितपुरुहूतो राजवाहनः कृशोदर्या अवन्तिसुन्दर्या अन्तिके जगाम। या वसन्तसहायेन समुत्सुकतया रतेः केलीशालभञ्जिकाविधित्सया कञ्चन नारीविशेषं विरच्यात्मनः क्रीड़ाकासारसारदारविन्दसौन्दर्येण पादद्वयमुद्यानवनदीर्घिकामत्तमरालिकागमनरीत्या लीलालसगतिविलासं तूणीर-

लावण्येन जङ्घे लीलामन्दिरद्वारकदलीलालित्येन मनोज्ञमूरुयुगं जैत्ररथचातुर्य्येण घनं जघनं किञ्चिद्विकसल्लीलावतंसकह्लारकोरककोटरानुवृत्त्या गङ्गावर्त्तसनाभिं नाभिं सौधारोहणपरिपाट्यावलित्रयं मौर्व्वीमधुकरपङ्क्तिनीलिमलीलया रोमावलिं पूर्णसुवर्णकलशशोभया कुचद्वन्द्वं लतामण्डपसौकुमार्य्येण बाहू जयशङ्खाभिख्यया कण्ठं कामिकर्णपूरसहकारपल्लवरागेण प्रतिबिम्बीकृतबिम्बरदनच्छदं बाणायमानपुष्पलावण्येन शुचिस्मितं अग्रदूतिकाकलकण्ठिकाकलापमाधुर्य्येण वचनजातं सकलसैनिकनायकमलयमारुतसौरभ्येण निश्वासपवनं जयध्वजमीनदर्पेण लोचनयुगलं चापयष्टिश्रिया भ्रूलते प्रथमसुहृदः सुधाकरस्यापनीतकलङ्कया कान्त्या वदनं लीलामयूरबर्हभङ्ग्या केशपाशञ्च विधाय समस्तमकरन्दकस्तूरिकासंमितेन मलयजरसेन प्रक्षाल्य कर्पूरपरागेण संमृज्य निर्म्मितेव रराज। सा मूर्त्तिमतीव लक्ष्मीः मालवेशकन्यका स्वेनैवाराध्यमानसङ्कल्पितवरप्रदानायाऽऽविर्भूतम्मूर्त्तिमन्तं मन्मथमिव तमालोक्य मन्दमारुतान्दोलितालतेव मदनावेशवती चकम्पे। तदनु क्रीडाविश्रम्भान्निवृत्ता लज्जया कानि कान्यपि भावान्तराणि व्यधत्त। ललनाजनं सृजता विधाता नूनमेषा घुणाक्षरन्या-

येन निर्म्मिता। नोचेदब्जभूरेवंविधनिर्म्माणनिपुणोयदिस्यात्तर्हि तत्समान लावण्यामन्यां तरुणीं किं नकरोतीति सविस्मयानुरागं विलोकयतस्तस्य समक्षं स्थातुं लज्जिता सा किञ्चित्सखीजनान्तरितगात्रा तन्नयनाभिमुखैः किञ्चिदाकुञ्चितै रचितभ्रूलतैरपाङ्गवीक्षितैरात्मनः कुरङ्गस्यानायमानलावण्यं राजवाहनं विलोकयन्त्यतिष्ठत्। सोपि तस्यास्तदोत्पादितभावरसानां सामग्र्यालब्धबलस्येव विप्रलम्भशरस्य शरव्यायमाणमानसो बभूव। सा मनसीत्थमचिन्तयत्। अनन्यसाधारणसौन्दर्य्येणानेन कस्यां पुरि भाग्यवतीनां तरुणीनां लोचनोत्सवः क्रियते। एव रत्नेनामुना पुरंध्रीणां पुत्रवतीनां सिमन्तिनीनां कानाम सीमन्तमौक्तिकीक्रियते। कास्यदेवी किमत्रागमनकारणमस्य मन्मथो मामपहसितनिजलावण्यमेनं विलोकयन्ती मसूययेवातिमात्रं मथ्नन्निजनामसान्वय कोति। किङ्करोमि कथमयं ज्ञातव्य इति। ततो बालचन्द्रिका तयो रन्तरङ्गवृत्तिं भावविवेकैर्ज्ञात्वा कान्तासमाज सन्निधौ राजनन्दनोदन्तस्य सम्यगाख्यानमनुचितमिति लोकसाधारणैर्वाक्यैरभाषत। भर्त्तृदारिकेयं सकलकलाप्रवीणो देवतासान्निध्यकरणाहवनिपुणो भूसुरकुमारो मणिमन्त्रौषधज्ञः परि-

चर्य्यार्हा भवत्या पूज्यतामिति। तदाकर्ण्य निजमनोरथमनुवदन्त्या बालचन्द्रिकया सन्तुष्टान्तरङ्गा तरङ्गावली मन्दानिलेनेव सङ्कल्पजेनाकुलीकृता राजकन्या जितमारं कुमारं समुचितासनासीनं निधाय सखीहस्तेन शस्तेन गन्धकुसुमाक्षतघनसारताम्बूलादिना नानावस्तुनिचयेन पूजां तस्मै कारयामास। राजवाहनोप्येवमचिन्तयत्। ननमेषा पूर्व्वजन्मनि मे जाया यज्ञवती नोचेदेतस्यामेवम्बिधोनुरागो मन्मनसि न जायेत। शापावसानसमये तपोनिधिदत्तं जातिस्मरत्वमावयोः समानमेव तथापि कालजनितविशेषसूचकवाक्यैरस्याज्ञानमुत्पादयिष्यामि। तस्मिन्नेव समये कोपि मनोरमो राजहंसः केलीविधित्सया तदुपकण्ठमगमत्। समुत्सुकया राजकन्यया मरालग्रहणे नियुक्तां बालचन्द्रिकां समवलोक्य समुचितो वाक्यावसर एष इति सम्भाषणनिपुणो राजवाहनः सलीलमलपत्। सखि पुरा शाम्बोनाम कश्चिन्महीवल्लभो मनोवल्लभया सह विहारवाञ्छया कमलाकरमवाप्य तत्र कोकनदकदम्बसमीपे निद्राधीनमानसं राजहंसं शनैर्गृहीत्वा बिसगुणेन तस्य चरणयुगलं निगड़यित्वा कान्तामुखसानुरागं विलोकयन् मन्दस्मितं विकसितैककपोलमण्डलस्तामभाषत। इन्दुमुखि मया बद्धो

मरालः शान्तो मुनिवदास्ते। स्वेच्छयानेन गम्यतामिति। सोपि राजहंसः शापमशपत्। महीपाल यदस्मिन्नम्बुजखण्डेनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं मामकारणं राज्यगर्व्वेणावमानितवानसि। तदेतत् पाप्मना रमणीविरहसन्तापमनुभवेति विषसन्नवदनः शाम्बो जीवनेश्वरीविरहमसहिष्णुर्भूमौ दण्डवत्प्रणम्य सविनयमभाषत। महाभाग यदज्ञानेनाकरवं तत्क्षमस्वेति। स तापसः करुणाक्रष्टचेता समवदत्। राजन्निहजन्मनि भवतः शापफलाभावो भवतु मद्वचनस्यामोघतया भाविनि जनने शरीरान्तरङ्गतायास्याः सरसिजाक्ष्या रसेन रमणो भूत्वा मुहूर्त्तद्वयं मच्चरणयुगलबन्धनकारितया मासद्वयं शृङ्खलनिगलितचरणो रमणीवियोगविषादमनुभूय पश्चादनेककालं वल्लभया सह राज्यसुखं लभस्वेति। तदनु जातिस्मरत्वमपि तयोरनुग्रहात् तस्मान्मरालबन्धनं न करणीयं त्वयेति सापि भर्त्तृदारिका तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता ननमयं मत्प्राणवल्लभ इति मनसा जानती रागपल्लवितमानसा समन्दहासमवोचत्। सौम्य पुरा शाम्बो यज्ञवतीसन्देशपरिपालनाय तथाविधं हंसबन्धनमकार्षीत्। तथाहि लोके पण्डिता अपि दाक्षिण्ये-

नाकार्यं कुर्वन्तीति। कन्याकुमारावेवमन्योऽन्य-पुरातनजननामधेयपरिचितैः परस्परज्ञानाय साभिज्ञमुक्त्वा मनोजरागपूर्णमानसौ बभूवतुः। तस्मिन्नवसरे मालवेन्द्रमहिषी परिजनपरिवृता दुहितृ-केलीविलोकनाय तं देशमवाप। बालचन्द्रिका तु तां दूरतो विलोक्य ससम्भ्रमं रहस्यनिर्भेदभिया हस्त-संज्ञया पुष्पाङ्गसेव्यमानं राजवाहनं वृक्षवाटि-कान्तरितगात्रमकरोत्। सा मानसारमहिषी सखीसमेताया दुहितुर्नानाविधां विहारलीलामनु-भवन्ती क्षणं स्थित्वा दुहितृसमन्विता निजागारगम-नायोद्युक्ता बभूव। मातरमनुगच्छन्त्यवन्तिसुन्दरी राजहंसकुलतिलकविहारवाञ्छया केलिवने मदन्तिकमागत भवन्तमकाण्ड एव विसृज्य मया समुचित-मिति जनन्यनुगमनं क्रियते तदनेन भवन्मनोऽनुरा-गोऽन्यथा माभूदिति मरालमिव कुमारमुद्दिश्य समु-चितालापं वदन्ती पुनः पुनः परिवृत्तदीन-नयना वदनं विलोकयन्ती निजमन्दिरमगात्। तत्र हृदयवल्लभकथाप्रसङ्गे बालचन्द्रिकाकथितमदन्वय-नामधेया [मन्मथरागपतनव्याकुलमानसा] विरह-वेदनया दिने दिने बहुलपक्षशशिकलेव क्षामक्षा-

[मन्मथरागव्याकुलेति क्वचित्पाठः]।

माहारादिसकलव्यापारं परिहृत्य रहस्यमन्दिरे मलयजरसक्षालितपल्लवकुसुमकल्पिततल्पतलायत्ततनुलता बभूव तत्र तथाविधामवस्थामनुभवन्ती मन्मथानलसन्तप्तां सुकुमारां कुमारीं निरीक्ष्य खिन्नो वयस्यागणः काञ्चनकलशसञ्चितानि हरिचन्दनोशीरघनसारमिलितानि तदभिषेककल्पितानि सलिलानि बिसतन्तुमयानि वासांसि च नलिनीदलमयानि तालवृन्तानि च सन्तापहरणानि बहूनि सम्पाद्य तस्याः शरीरमशिशिरयत्। तदपि शीतलोपचरणं सलिलमिव तप्ततैले तदङ्गं दहनमिव समन्तादाविश्चकार। किं कर्त्तव्यता मूढां विवशां बालचन्द्रिकामीषदुन्मीलितेन कटाक्षवीक्षितेन वाष्पकुलाकुलेन विलोक्य विरहानललोलानिःश्वासग्लपिताधरया नताङ्ग्या शनैः सगद्गदं व्यलापि प्रियसखि कामः कुसुमायुधः पञ्चबाण इति नूनमसत्यमुच्यते। इयमहमयोमयैरसङ्ख्यैरिषुभिरनेन हन्ये। सखि चन्द्रमसं वडवानलादतितापकरं मन्ये। यदास्मिन्नन्तः प्रविशति शुष्यति पारावारः सति निर्गते तदैव वर्द्धते दोषाकरस्य दुष्कर्म्म किं वर्ण्यते मया यदनेन निजसहोदर्याः पद्मालयायाः गेहभूतमपि कमलं विहन्यते विरहानलसन्तप्तहृदयस्पर्शेन नूनमुष्णीकृतः स्वल्पीभवति मलयानिलः

नवपल्लवकल्पितं तल्पमिदमनङ्गाग्निशिखापटलमिव सन्तापं तनो तनोति हरिचन्दनमपि पुरानिजयष्टिसंश्लेषवदुरग[वदन]विशोल्वणगरलसङ्कलितमिव तापयति शरीरं तस्मादलमलमायासेन शीतलोपचारेण लावण्यजितमन्मथो राजकुमार एवागदङ्कारो मन्मथज्वरापहरणे सोपि लब्धुमशक्यो मया किं करोमीति बालचन्द्रिकामनोजज्वरावस्थापरमकाष्ठाङ्गतां कोमलाङ्गीं तां राजवाहनलावण्याधीनमानसामनन्यशरणामवेक्ष्यात्मन्यचिन्तयत् । कुमारः सत्वरमानेतव्यो मया नोचेदेनां स्मरणीयाङ्गतिं नयिष्यति मीनकेतनः तत्रोद्याने कुमारयो रन्योन्यावलोकनवेलायामसमसायकः समं मुक्तसायकोभूत् । तस्मात्कुमारानयनं सुकुमारं ततोऽवन्तिसुन्दरीरक्षणाय समयोचितकरणीय चतुरं सखीगणं नियुज्य राजकुमारमन्दिरमवाप । पुष्पबाणबाणतूणीरायमानमानसोनङ्गतमावयवसम्पर्कपरिम्लानपल्लवशयनमधिष्ठितो राजवाहनः प्राणेश्वरीमुद्दिश्य सह पुष्पोद्भवेन संलपन्नागतां प्रियवयस्यामालोक्य पादमूलमन्वेषणीया लतेव बालचन्द्रिकागतेति सन्तु-

[रदनेति क्वचित्पाठः] ।

ष्टमनाः निटिलतटमण्डनीभवद्भुजकोरकाञ्चितल सदञ्जलिपुटामितो निषीदेति निर्दिष्टसमुचितासनासीनामवन्तिसुन्दरीप्रेषितं सकर्पूरं ताम्बूलं विनयेन ददतीं तां कान्तावृत्तान्तमपृच्छत्। तया सविनयमभाणि देव क्रीडावने भवदवलोकनकालमारभ्य मन्मथमथ्यमाना पुष्पतल्पादिषु तापशमनमलब्धवती वामनेनेवोन्नततरुफलमलभ्यं त्वदुरस्थलालिङ्गनसौख्यं स्मरान्धतयालिप्सुः सा स्वयमेव पत्रिकामालिख्य वल्लभायैनामर्पयेति मां नियुक्तवती राजकुमारः पत्रिकामादाय पपाठ।

सुभग कुसुमसुकुमारं
जगदनवद्यन्निरीक्ष्य ते रूपम्।
मम मानसमभिलषति
त्वञ्चित्तङ्कुरु तथा मृदुलम् ॥ १ ॥

इति पठित्वा सादरमभाषत सखि छायावन्मामनुवर्तमानस्य पुष्पोद्भवस्य वल्लभा त्वमेव तस्या मृगीदृशो बहिश्चराः प्राणा इव वर्तसे त्वच्चातुर्यमस्यां क्रियायां लतायामालवालमभूत् यत्तवाभीष्टं येन क्रियामनोरथः फलिष्यति तदखिलं करिष्यामि नताङ्ग्या मन्मनः काठिन्यमाख्यातं यदा केलीवने कुरङ्गनयनालोचनपथमवर्तत तदैवापहृतमदीय-

मानसा सा स्वमन्दिरमगात् सा चेतसो माधुर्य्यं काठिन्ये स्वयमेवजानाति दुष्करः कन्यान्तःपुरप्रवेशः तदनुरूपमुपायमुपपाद्यश्वः परश्वोवा नताङ्गीं सङ्गमिष्यामि मदुदन्तमेवमाख्याय शिरीषकुसुम-सुकुमाराया यथा शरीरबाधानजायेत तथाविध-मुपायमाचरेति बालचन्द्रिकापि तस्य प्रेमगर्भितं वचनमाकर्ण्य सन्तुष्टाकन्यापुरमगच्छत्। राजवा-हनोऽपि यत्र हृदयवल्लभावलोकनसुखमलभत तदुद्यानं विरहवेदनाविनोदाय पुष्पोद्भवसमन्वितो जगाम। तत्र चकोरलोचनावचितपल्लवकुसुमनिकु-रम्बं महीरुहसमूहं शरदिन्दुमुख्या मन्मथसमारा-धनस्थानञ्च नताङ्गीपदपङ्क्तिचिह्नितं शीतलसैकत-तलं च सुदती भुक्तमुक्तं माधवीलतामण्डपान्तर-पल्लवतल्पञ्च विलोकयन् ललनातिलकविलोकनवे-लाजनितशेषाणि स्मारं स्मारं मन्दमारुताकम्पितानि नवचूतपल्लवानि मदनाग्निशिखाइवचकितचकितो दर्शं दर्शं मनोजकर्णेजपानामिव कोकिलकीरमधु-कराणां क्वणितानि श्रावं श्रावं मारविकारेण क्वचिदप्यवस्थातुमसहिष्णुः परिबभ्राम। तस्मिन्न-वसरे धरणीसुर एकः सूक्ष्मचित्रनिवसनः स्फुर-न्मणिकुण्डलमण्डितो मुण्डितमस्तकमानवसमेत

श्चतुरवेषमनोरमो यदृच्छया समागतः समन्ततो-ऽभ्युल्लसत्तेजोमण्डलं राजवाहनयाशीर्वादपूर्वकं ददर्श राजाप्यादरं को भवान् कस्यां विद्यायां निपुण इति तं प्रपच्छ। स च विद्येश्वरनामधेयोऽहमैन्द्रजालिकविद्या कोविदो विविधदेशेषु राजमनोरञ्जनाय भ्रमन्नु-ज्जयिनीमद्यागतोऽस्मीति शशंस। पुनरपि राज-वाहनं सम्यगालोक्यास्यां लीलावनौ पाण्डुरता-निमित्तं किमिति साभिप्रायं विहस्याऽपृच्छत्। पुष्पोद्भवस्त्वैन्द्रजालिकचातुर्य्यं निजकार्य्यकरणं तर्क-यन्ननेनमादरेण बभाषे। ननु सतां सख्यस्या भाषण-पूर्व्वतया चिरं रुचिरभाषणो भवानस्माकं प्रिय-वयस्योजातः सुहृदामकथ्यञ्च किमस्ति केलीवने-ऽस्मिन्वसन्तमहोत्सवागतायाः मालवेन्द्रसुताया राजनन्दनस्यास्य चाकस्मिकसन्दर्शनेनान्योन्यानुरा-गातिरेकः समजायत। सतत सम्भोगसिद्ध्युपाया-भावेनासावीदृशीमवस्थामनुभवतीति विद्येश्वरो लज्जाभिरामं राजकुमारमुखमवीक्ष्य विरचितमन्द-हासो व्याजहार। देव भवदनुचरे मयि तिष्ठति तवकार्य्यमसाध्यं किमस्ति। अहमिन्द्रजालविद्यया मालवेन्द्रं मोहयन् पौरजनसमक्षमेव तत्तनयापरि-णयं रचयित्वा कन्यान्तःपुरप्रवेशं कारयिष्यामीति

वृत्तान्त एष राजकन्यायै सखीमुखेन पूर्वमेव कथयितव्यमिति सन्तुष्टमना महीपतिरनिमित्तं मित्रं प्रकटीकृत कृत्रिमक्रियापाटवं विप्रलम्भकृत्रिमप्रेमसहजसौहार्दवेदिनं तं विद्येश्वरं सवहुमानं विससर्ज्ज। अथ राजवाहनो विद्येश्वरस्य क्रियापाटवेन फलितमिव मनोरथं मन्यमानः पुष्पोद्भवेन सह मन्दिरमुपेत्य सादरं बालचन्द्रिकामुखेन निजवल्लभायै महीसुरक्रियमाणं सङ्गमोपायं वेदयित्वा कौतुकाकृष्टहृदयः कथमिमाङ्क्षपां चपयामीत्यतिष्ठत्। परेद्युः प्रभाते विद्येश्वरो रसभावगीतिरीतिगतिचतुरस्तादृशेनमहता निजपरिजनेन सह राजभवनद्वारान्तिकमुपेत्य दौवारिकनिवेदितनिजवृत्तान्तः सहसोपगम्य सप्रणाममैन्द्रजालिकः समागत इति द्वाःस्थै र्व्विज्ञापितेन तद्दर्शनकुतूहलाविष्टेन समुत्सुकावरोधसहितेन मालवेन्द्रेण समाहूयमानो विद्येश्वरः कच्यान्तरं प्रविश्य सविनयमाशिषं दत्वा तदनुज्ञातः परिजनताड्यमानेषु वाद्येषु नदत्सु गायकीषु मन्दकलकोकिलामञ्जुलध्वनिषु समधिकरागरञ्जितसामाजिकमनोवृत्तिषु पिच्छिकाभ्रमणेषु सपरिवारं परिवृढं भ्रामयन्मुकुलितनयनः चणमतिष्ठत्। तदनुविषमं विषमुल्वणं वमन्तः

फणालङ्करणरत्नराजिनीराजितराजमन्दिरा भोगा भोगिनो भयं जनयन्तो विचेरुः। गृध्राश्च बहवः खुण्डैरहिपतीनादाय दिवि समाचरन्। ततोऽग्रजन्मा नरसिंहस्य हिरण्यकशिपोर्दैत्येश्वरस्य विदारणमभिनीय महदाश्चर्य्यान्वितं राजानमभाषत:। राजन्नवसानसमये भवता शुभसूचकं द्रष्टुमुचितम्। ततः कल्याणपरम्परावाप्तये भवदात्मजाकारायास्तरुण्या निखिललक्षणोपेतस्य राजनन्दनस्य विवाहः कार्य्य इति। तदवलोकनकुतूहलेन महीपालेनानुज्ञातः ससङ्कल्पितार्थसिद्धिसम्भावनसंफुल्लवदनः सकलमोहजनकमञ्जनलोचनयोर्निक्षिप्य परितो व्यलोकयत् सर्वेषु तदैन्द्रजालिकमेव कर्म्मेति साद्भुतं पश्यत्सु रागपल्लवितहृदयेन राजवाहनेन पूर्व्वसङ्केतसमागतामनेकभूषणभूषिताङ्गीमवन्तिसुन्दरीम्वैवाहिकमन्त्रतन्त्रनैपुण्येनाग्निं साक्षीकृत्यसंयोजयामास क्रियावसाने सतीन्द्रजालपुरुषाः सर्वेगच्छन्तु भवन्त इति द्विजन्मनोच्चैरुच्यमाने सर्व्वे मायामानवा यथायथमन्तर्भावङ्गता राजवाहनोपि पूर्व्वसङ्कल्पितेन गूढोपायचातुर्य्येणैन्द्रजालिकपुरुषवत्कन्यान्तःपुरं प्रविवेश। मालवेन्द्रोपि तदद्भुतमन्यमानस्तस्मै वाड़वाय प्रचुरतरं

धनं दत्वा विद्येश्वरत्वमिदानीं साधयेति तं विसृज्य स्वयमन्तर्मन्दिरं जगाम। ततोऽवन्तिसुन्दरी [प्रियसहचरीसमेता] वल्लभार्पिता सुन्दरमन्दिरं ययौ। एवन्दैवमानुषबलेन मनोरथसाफल्यमुपेतो राजवाहनः सरसमधुरचेष्टाभिः शनैः शनैर्हरिणलोचनाया लज्जां अपनयन् सुरतरागमुपचयन् रहो विश्रम्भमुपजनयन् संलापे तदनुलापपीयूषपानलोलुभश्चित्र चित्रं चित्तहारिणं चतुर्दशभुवनवृत्तान्तं श्रावयामास।

इति श्रीदण्डिनः कृतौ राजवाहनचरिते दशकुमारचरिते पञ्चमोच्छ्वासः।

समाप्तश्च पूर्व्वखण्डः।

---

[सप्रियसहचरीपरिवारेति क्वचित्पाठः।]

# विज्ञापनम् ।

कलिकाताराजधान्यां श्रीयुतभुवनचन्द्रवसाकसंस्थापित संवाद ज्ञानरत्नाकराख्य यन्त्रे देवनागराक्षरे मुद्रितपुस्तकविवरणम् ।

वेणीसंहार नाटकम् (महाकवि भट्टनारायण प्रणीतम्) गवर्ण- मेण्ट संस्कृतपाठशालाध्यापक श्रीतारानाथतर्कवाचस्पतिभट्टा- चार्य्यकृतव्याख्यान सहितं तेनैव संस्कृतम् । पृष्ठा २६२ मूल्य २

सुश्रुतः, आयुर्वेदः, भगवताधन्वन्तरिणोपदिष्टेन सुश्रुतनाम- धेयेन तच्छिष्येण विरचितः । पृष्ठा ११६० मूल्य ७

कुमारसम्भवम्, सप्तमसर्गान्तम् [कालिदास कृतम्] श्रीमल्लि- नाथसूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया, श्रीतारा- नाथतर्कवाचस्पतिभट्टाचार्य्येण विवृतव्याकरणसूत्राद्यंशयान्वि- तम्, तेनैवसंस्कृतम् पृष्ठा २६२ मूल्य २

कालिदासकृतकुमारसम्भवउत्तरखण्डम् सम्पूर्णमूलमात्र मूल्य ॥०
भारविकृतकिरातार्जुनीयम् " " "

( यन्त्रस्थ )

सांख्यतत्त्वकौमुदी (वाचस्पतिमिश्र विरचिता) गवर्णमेण्ट संस्कृतपाठशालाध्यापक श्रीयुततारानाथतर्कवाचस्पतिभट्टाचार्य्य कृतटीकासहिता ।

रघुवंशम् (महाकविकालिदासकृतम्) मल्लिनाथटीकासहितम् ।
किरातार्ज्जुनीयम् (भारवि कृतम् " "
शिशुपालबधम् ( माघ कृतम् ) " "
भाषापरिच्छेद सहिता मुक्तावली ( विश्वनाथपण्डितकृत )
गीतगोविन्दम् (जयदेव कृतम्) बालबोधिनीटीकासहितम् ।
दशकुमारचरितम् ( दण्डिन कृतम् ) पूर्वपीठिकासहितम् ।

हिन्दी ।

श्रीमद्भगवद्गीता, श्रीजगन्नाथशुक्ल विरचित मनभावनी भाषा टीका समेत मूल भगवद्गीता पृष्ठा २१४ जिल्द मूल्य २
प्रेमसागर दशमस्कन्धभागवत् की भाषा ४८० पृष्ठा जिल्दमूल्य२
वैतालपच्चीसी पृष्ठा १५८ जिल्द मूल्य १